अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला–१०

# भाष्याकूतम्

## (प्रत्याख्यातसूत्रसंग्रहः)


लेखकौ

वि. कार्तिकः भागवतः

वि. श्रीगणेशदेवरूभट्टः

प्रधानसंपादकः

आचार्यः श्रीनिवासः वरखेडी

कुलगुरु

संपादकः

आचार्यः मधुसूदनः पेन्ना

संचालकः संशोधन–प्रकाशनविभागः




राष्ट्रहिताय संस्कृतम्


कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः

रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

तथा

न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

| | | |
|---|---|---|
| शीर्षकम् | – | भाष्याकूतम् (प्रत्याख्यातसूत्रसंग्रहः) |
| लेखकौ | – | वि. कार्तिकः भागवतः<br>वि. श्रीगणेशदेवरूभट्टः |
| प्रधानसंपादकः | – | आचार्यः श्रीनिवासः वरखेडी<br>कुलगुरु, क.का.सं.वि., रामटेकम् |
| संपादकः | – | आचार्यः मधुसूदनः पेन्ना<br>संचालकः संशोधन–प्रकाशनविभागः<br>क.का.सं.वि., रामटेकम् |
| अखिलभारतीय–<br>प्राच्यविद्यासम्मेलनम् | – | प्रो. गौतमः पटेल, अध्यक्षः<br>प्रो. सरोजा भाटे, सचिवा<br>प्रो. गणेशः थिटे, उपाध्यक्षः |
| संपादकमण्डलम् | – | डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक<br>डॉ. वीणा गानु, नागपुर. |
| प्रकाशनवर्षम् | – | **2020** |
| आवृत्तिः | – | प्रथमा |
| मूल्यम् | – | **335.00** |
| आय.एस.बी.एन. | – | 978-8183-153-768 |
| मुखपृष्ठम् | – | श्री. उमेश पाटील, क.का.सं.वि., रामटेकम् |
| मुद्रकः | – | एस.के.प्रिन्टर्स, दिल्ली |
| प्रकाशकः | – | कुलसचिवः,<br>कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,<br>प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.<br>तथा<br>न्यु भारतीय बुक कार्पोरेशन, नवी दिल्ली |

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success. My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

**Chief Patron**
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

**Patron**
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

**AIOC President**
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

**AIOC General Secretary**
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

**AIOC Local Secretary**
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

**Additional Local Secretary**
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

**Organising Committee**
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# विषयानुक्रमणिका

# उपोद्घातः

वेदार्थनिश्चये सहायकस्य शब्दसाधुत्वज्ञानविषयस्य व्याकरणस्य वेदाङ्गत्वमुपपद्यते। तत्र सत्यामपि प्राचीनायां व्याकरणपरम्परायां पाणिनीयव्याकरणमेव जागर्ति साम्प्रतं वेदाङ्गतया प्रथितम्। वेदार्थावगमश्च तद्गतवाक्यार्थावगमाधीनः। समेषां वाक्यानाम् अर्थावगमश्च असर्वज्ञैः दुःशकः, वाक्यानामानन्त्यात्। तथाचोक्तं भाष्ये - "अथैतस्मिन् शब्दोपदेशे सति ..... इत्यादिना प्रतिपदपाठस्य अनभ्युपायत्वं वदता श्रीमता महाभाष्यकारेण जिज्ञासापूर्वकं शब्दानुशासनस्य व्याकरणनिबन्धत्वमाह। तत्रैवं सति कथं तर्हीमे शब्दाः प्रतिपत्तव्याः? किञ्चित्सामान्यविशेषणवल्लक्षणं प्रवर्त्यम्। येन महतो महतः शब्दौघान् प्रतिपद्येरन्। किं पुनस्तत्? उत्सर्गापवादौ इत्यादिः। एवं च इदं व्याकरणम् उत्सर्गापवादरीत्या सूत्ररूपतां प्राप्य अष्टस्वध्यायेषु द्वात्रिंशत्पादेषु च निबद्धम्। सर्वस्य रसनाग्रे नरीनृत्यते पदमिदं - पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् । सर्वोपकारकं ग्राह्यं कृत्स्नं, त्याज्यं न किञ्चन ॥ इति ॥ "षडङ्गविदस्तत्तथा धीमहे" इति गोपथब्राह्मणवाक्यात्, "ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति महाभाष्यवचनेन, तथा शिक्षादिवचनैश्च । उक्तञ्च – **छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥** (पा.शिक्षा.४१, ४२) इति । षडङ्गेषु व्याकरणं मुखस्थानीयत्वेन जेगीयते । "प्रधानञ्च षट्स्वङ्गेषु व्याकरणम्" इति पस्पशाह्निके महाभाष्यकाराः । पदसाधुत्वज्ञा-पनमस्य मुख्यं प्रयोजनम् । "साधुत्वज्ञानविषया सैव

व्याकरणसृतिः" (वा.प.ब्रह्मका.१४२) इत्यभियुक्तिरिति मञ्जूषायाम् आचार्यनागेशः । **ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् । सारस्वतञ्चापिशलं शाकलं पाणिनीयकम्** ॥ इति सत्सु बहुषु व्याकरणेषु पाणिनीयमेव मूर्धावतंसतया विराजते । माहेश्वरसूत्रमूलकत्वेन पाणिनीयस्यैव वेदाङ्गत्वमिति आचार्यनागेशः । उक्तञ्च शेखरे – 'श्रुतिमूलकत्वात् अस्यैव वेदाङ्गत्वम् । अत्र प्रमाणं -"येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तम्" इति शिक्षावचनम् । हरिणाप्युक्तं – "तस्मादकृतकं शास्त्रं स्मृतिश्च सनिबन्धनम्" इति ।

व्याकरणशब्दार्थश्च व्याक्रियन्ते व्युत्पाद्यन्ते असाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते अनेनेति व्याकरणम् । वि आङ् पूर्वकात् कृधातोः 'करणाधिकरणयोश्च' इति करणे ल्युट् । असाधुशब्दावधिकसाधुशब्दकर्मक-पृथक्कृतिप्रयोजकनियमविशेषः व्याकरणम् । व्याकृतिकरणं व्याकरणम् । भाष्ये लक्ष्यलक्षणे व्याकरणमित्युक्तम् । व्याकरणस्यैव अपरं नाम शब्दानुशासनमिति, तस्य उक्त एवार्थः - शब्दा अनुशिष्यन्ते अनेनेति व्युत्पत्तेः ।

---

**व्याकरणपरम्परा** -

व्याकरणपरम्परा सामवेदस्य ऋक्तन्त्रे एवं वर्णिता – "इदमक्षरं छन्दः वर्णशः समनुक्रान्तम् । यथा आचार्या ऊचुः ब्रह्मा बृहस्पतये, बृहस्पतिरिन्द्राय, इन्द्रो भारद्वाजाय, भारद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यः तं खल्विममक्षरसमाम्नायम् आम्नायमित्याचक्षते । न भुक्त्वा न नक्तं प्रब्रूयात्, ब्रह्मराशिः" इति ।

**शाब्दिकाचार्यपरंपरा** –

एष पाणिनिराचार्यः मूलभूतसूत्रोपज्ञाता नन्दमहाराजराजधानी पाटलीपुत्रवास्तव्यः शङ्करस्वामितनयः पूर्वोत्तरमीमांसावृत्तिकार-भगवदुपवर्षसहोदर-वर्षोपाध्यायाधीतशास्त्रः सलातुरग्रामाभिजनः शलङ्कतनयः दाक्षीपुत्रः भगवान्पाणिनिगोत्रः आहिकनामा मुनिगोत्राश्रयनाम्नैव प्रसिद्ध एव सर्वेषां विदितः । **अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥** इति सूत्रलक्षणं पाणिनिसूत्रेषु सर्वाङ्गीणतया अनुवर्तते।

महर्षिः कात्यायनः वार्तिककाररूपेण मन्यते । अष्टाध्याय्याः परं भाषासु प्रविष्टनव्यशब्दानामौचित्यं ख्यापयितुं वार्तिकरचना अभूत् । कात्यायननिर्मितानि वार्तिकानि अष्टाध्यायीपूरकत्वेन सन्ति । वार्तिककारः पाणिनीयसम्प्रदायस्य द्वितीयः आचार्य इति परिगण्यते । अनेन कात्यायनेन भ्राजाख्याः श्लोका अपि विरचिताः । यदन्तर्गत एव 'यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले । सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ॥' श्लोकः भाष्यकारैः उपन्यस्तः । वार्तिकलक्षणञ्च - **उक्तानुक्तदुरुक्तानाञ्चिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्तिकं प्राहुः वार्तिकज्ञा मनीषिणः ॥** इति ।

तत्र कुण्यदिभिराचार्यैः रचितासु वृत्तिषु क्वचिन्न्यूनतामवलोक्य गोनर्ददेशे भगवान् पतञ्जलिगोत्रजन्मा श्रीशेषावतारत्वेन विख्यातः कश्चिन्महाप्रतिमप्रभावः

मुनिप्रवरो महाभाष्यं निरमात् । तच्चेदं भाष्यं एतल्लक्षणोपेतम् - **सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः** ॥ इति ।

एवं प्रकारेण व्याकरणमिदं त्रिमुनिव्याकरणमित्येव प्रसिद्धम् । एतदतिरिक्त-भर्तृहरि-कैयट-नागेश-दीक्षित-कौण्डभट्ट-इत्येवमादयः आचार्याः स्वप्रतिभोल्लसित-संस्कृतव्याख्यानेन व्याकरणजगत् अभूषयन्त । एवं येषामध्ययनाध्यापनादिनेयं व्याकरणपरम्परया सम्प्राचलत् तान् विदुषः प्रणम्य अल्पमेव वक्तव्यमुच्यते । "ब्राह्मणेन निष्कारणः धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयः" इत्युक्तप्रकारेण षडङ्गेषु व्याकरणमन्यतमम् । तच्च व्याकरणं सूत्रात्मकम् । तेषु पाणिनिकृतेषु सूत्रेषु दृष्टप्रयोजनाभावं मनसिकृत्य भाष्यकारेण कानिचित् सूत्राणि प्रत्याख्यातानि । प्रयोजनन्तु लाघवसम्पादनम् । क्वचित्स्थानेषु सम्पूर्णं सूत्रमेव प्रत्याख्यातं क्वचित्तु पदम् । तानि च सूत्राणी न एकत्र उपलभ्यन्ते । अन्यत्रापि चर्च्यांशनिरूपणावसरे प्रत्याख्यातानि तस्मिन्सूत्रभाष्ये नोपलभ्यन्ते । तस्मात् अध्येतॄणां सुखबोधो जायताम् इति धिया अध्यायशः ग्रन्थेऽस्मिन् प्रत्याख्यातानि सूत्राणि एकत्रीक्रियन्ते । अत्र ग्रन्थे भाष्यकारोक्तदिशा सक्रमं प्रत्याख्यानप्रकारः निरूपितः । पाणिनीये यः क्रमः सूत्राणां तथा अत्रापि सूत्रक्रमः । किन्तु प्रत्याख्यातान्येवात्र व्याख्यातानि । किञ्चात्र अस्माभिः ध्वननेन प्रत्याख्यातानि इह नोल्लिखितानि । सम्पूर्णं भाष्यं यावता नावलोक्यते तावता ध्वननादेः ज्ञानासम्भवात् । तथा सूत्रान्तरे यस्य प्रत्याख्यानमभिहितं तदपि मूले न निविष्टम् । (तद्यथा – द्व्येकयोर्द्विवचनैकवचने(१/४/२२), बहुषु बहुवचनम्(१/४/२१) इति सूत्रे क्रियमाणः

व्यत्ययः तद्धितश्चासर्वविभक्तिः(१/१/३८) इत्यत्र निरूपितः वर्तते ।) अत्र च अनवधानवशात् सूत्राणि त्यक्तानि स्युः । किञ्च अनुवृत्यर्थकः चकारः प्रत्याख्यातोऽत्र न गृहीतः। विपश्चितः यद्यत्र गुणलेशः स्यात्तदा तं परिगृह्य पुरुषबुद्धिसहजान् भ्रमप्रमादादिदोषान् परित्यज्य अस्मान् शास्त्रपथेऽस्मिन् आशिषा अनुगृह्णन्तु इति संप्रार्थयावहे।

**गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः। शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति॥**

**लेखकौ**

# सङ्क्षिप्ताक्षरसूची

**प्र.अ** :- प्रत्याख्यातांशः । **प्र.क्र** :- प्रत्याख्यानक्रमः ।

**प्र.सू.स्व** :- प्रत्याख्यानानन्तरं सूत्रस्वरूपम् ।

**भा.पु.स.** :- भाष्यपुस्तकसंख्या । **भा.पृ.स.**:- भाष्यपृष्ठसंख्या

# भाष्याकृतम्

## प्रथमाध्याये प्रत्याख्यातानि सूत्राणि

*प्रथमः पादः*

### १. न धातुलोप आर्धधातुके

**सूत्रार्थः** :- धात्वंशलोपनिमित्तार्धधातुके परे इको गुणवृद्धी न स्तः । लोलुव इत्युदाहरणम् ।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- अत्र च "लूञ् छेदने" इति धातोः यङि, द्वित्वे, लोलूय इति यङन्तो धातुः सिद्धः । तस्मात् पचाद्यचि, "यङोचि च" इति लुकि च लोलू अ इति स्थिते, इगन्तस्याङ्गस्य "सार्वधातुकार्धधातुकयोः" इति गुणः प्राप्नोति । तन्निवारणार्थमिदं सूत्रमारब्धम् । आरब्धे च सूत्रे लोलूय इत्यत्र धात्वंशलोपो जात इति कृत्वा गुणवृध्योः प्रतिषेधे प्राप्त उवङि, लोलुव इति सिध्यति । इदञ्च प्रयोजनं सूत्रं विनापि साधयितुं शक्यम् । तथाहि -

यत्र तावत् "अतो लोपः" इत्यकारलोपः क्रियते तदनन्तरं "यस्य हलः" इति यलोपस्तत्राकारस्य स्थानिवद्भावो यथा - लोलू अ इति स्थिते, गुणे कर्तव्ये "अतो लोपः" इति कृतस्याकारलोपस्य स्थानिवद्भावात् गुणप्रतिषेधस्सिध्यति । ननु च यत्र "यङोऽचि च" इति यङो लुक् क्रियते तत्र हलचोरादेश इति कृत्वा

स्थानिवद्भावनिषेधात् साक्षादिगन्तमङ्गं लभ्यते । तस्मात् लोलू अ इत्यवस्थायां गुणः प्रसज्यते । तन्निषेधार्थं सूत्रमिति चेत् – न । तत्रापि परत्वात् अत एव लोपो भवति । यत्र "यङोऽचि च" इत्यस्य प्रवृत्तिस्तत्र सर्वत्र "अतो लोपः" प्रवर्तते चेत् "यङोऽचि च" इति निरवकाशस्सम्पद्यते । तस्मात् अवश्यं "यङोऽचि च" इति "अतो लोपः" इति सूत्रं बाधते । बाधे च सूत्रमिदमावश्यकमिति चेत् – न ।

इष्टसिद्ध्यर्थं योगविभागः क्रियते । "अतो लोपः" इत्यनन्तरं "यस्य हलः" इति सूत्रं वर्तते । तत्र योगविभागः क्रियते । यस्य इति एको योगः । "अतो लोपः" इति वर्तते । तस्माद्यकाररूपस्यावयविनोऽवयवोऽकारो लुप्यत इति तदर्थः । ततो हल इति, हल उत्तरस्य यस्य लोपो भवतीति । तस्मात् लोलूय अ इति स्थिते परत्वात् योगविभागाद्वा अकारलोपे, स्थानिवद्भावे च इगन्ताङ्गस्याभावात् गुणवृद्ध्योः प्राप्तिरेव नेति कृत्वा सूत्रं नापेक्षितम् ।

यत्र तर्हि अजादिप्रत्ययं निमित्तीकृत्य लोपः प्रवर्तते तत्र "अतो लोपः" प्रवर्तते । यत्र तर्ह्यनैमित्तिको लोपः तत्राप्यकारलोपे स्वीक्रियमाण इष्टयोर्गुणवृद्ध्योः प्राप्तिरेव न भवतीति नोनाव इत्यादि न सिद्ध्यतीति चेत् – लोपो लुकं न सर्वत्र बाधते । अपि तु प्रत्ययनिमित्तको लोपः प्रत्ययनिमित्तकमेव लुकं बाधते । यत्र तु लुक् प्रत्ययनिमित्तको न, तत्र लोपो न लुकं बाधते । तस्मात् नोनाव इत्यादि सिद्ध्यति । लुकः प्रत्ययनिमित्तकत्वाभावात् न दोषः[1]।

---

[1] भा.पु.स.. १ भा.पृ.स. २०७

## २. दीधीवेवीटाम्

**सूत्रार्थः :-** दीधीवेव्योः इटश्च गुणवृद्धी न स्तः ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** दीधीवेव्योरिटश्च गुणवृद्धी न स्तः । भवितेत्युदाहरणम् । भूधातोः लुटि, तिपि, डा आदेशे, "स्यतासी लृलुटोः" इति तासि, भू तास् आ इत्यवस्थायाम्, इडागमे, टिलोपे, वुकि च भविता इति रूपम् । भवित् आ इति स्थिते इकारस्य गुणः प्राप्तः, स अनेन वार्यते । तदर्थम् इड्ग्रहणम् । आदीध्यनम् आदीध्यकः, आवेव्यनम् आवेव्यक इत्यत्र गुणवृद्धिप्रतिषेधो दीधिवेवीङ्ग्रहणस्य प्रयोजनम् । इमानि प्रयोजनान्यन्यथैव सिद्धानि । दीधीवेव्यौ तावत् छन्दोविषयौ । छन्दसि च दृष्टानुविधिर्भवति । छन्दसि तयोर्धात्वोर्गुण एव दृष्टः । तस्मात् दीधीवेव्योर्ग्रहणं छन्दोऽर्थमिति वक्तुं न शक्यते । छन्दस्येव प्रयोग इति हेतोर्लोकप्रयोगेषु गुणवृद्धिवारणार्थत्वमपि वक्तुं न शक्यते । तस्मात् तयोर्ग्रहणं न कार्यम् ।

"नेड्वशि कृति" इति सूत्रात् इडित्यनुवर्तमाने "आर्धधातुकस्येड् वलादेः" इत्यत्र पुनरिड्ग्रहणं व्यर्थं सञ्ज्ञापयति इट् इड्रूपेणैव तिष्ठति, विकारातां नाप्नोतीति । एवञ्च इटो विकारताया अभावः सूत्रान्तरेण सिद्ध इति हेतोः पुनः तत्साधनार्थत्वेन इड्ग्रहणं न कार्यम् [1] ।

---

[1] भा.पु.स.. १ भा.पृ.स. २२२

## ३. मुखनासिकावचनोऽनुनासिकः

**सूत्रार्थः :-** मुखसहितया नासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् ।

**प्र.अ :-** अत्र मुखग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** अक्रियमाणे मुखग्रहणे नासिकावचनोऽनुनासिक इति सूत्रं स्यात् । तदा ये नासिकयैवोच्चार्यन्ते तेषामेव अनुनासिक इति संज्ञा स्यान्नतु मुखसहितनासिकया उच्चार्यमाणानाम् । यदि नासिकाग्रहणं न क्रियते तदा मुखवचनोऽनुनासिक इति सूत्रं स्यात् । येन च मुखेनोच्चार्यमाणानामेव संज्ञा प्रसक्ता स्यात् । अतो निरुक्तयोर्दोषयोर्वारणार्थं मुखनासिकावच-नोऽनुनासिक इति सूत्रं कर्तव्यम् इति चेन्न ।

मुखग्रहणं शक्यमकर्तुम् । तर्हि केवलानां नासिकावचनानां संज्ञा स्यात् । मुखसहितनासिकयोच्चार्यमाणानां संज्ञासिद्धिः न भवतीति चेदाह – प्रासादवासिन्यायेन नासिकावचनग्रहणेनैव मुखसहितनासिकयोच्चार्यमा-णानां वर्णानामपि ग्रहणं सिद्ध्यति । तस्मान्मुखग्रहणं विनापि लिलक्षयिषितं सिद्ध्यति । को नाम प्रासादवासिन्याय इति चेत् – केचित् प्रासादवासिनः, केचिद्भूमिवासिनः, केचिदुभयवासिनः । तत्र ये प्रासादवासिनस्ते प्रासादवासिग्रहणेन गृह्यन्ते, एवं ये तावत् भूमिवासिनः ते भूमिवासिग्रहणेन गृह्यन्ते, ये च तत्रोभयवासिनः ते गृह्यन्त एव भूमिवासित्वेन प्रासादवासित्वेन च । उभयत्र उषितत्वात् । अयमेव प्रासादवासिन्यायः । एवमत्रापि केचन मुखवचनाः, केचन नासिकावचनाः, केचिदुभयवचनाः । तत्र मुखवचना मुखग्रहणेन, नासिकावचना नासिका ग्रहणेन,

ये च उभयवचनास्ते गृह्यन्त एव मुखग्रहणेन नासिकाग्रहणेन च । तस्मात् नासिकावचना इत्यनेनैव मुखसहितनासिकयोच्चार्यमाणाः, केवलं नासिकयोच्चार्यमाणाश्च गृह्यन्ते । नासिकाग्रहणमेव मास्त्विति तु न चोद्यम् । मुखग्रहणेन मुखसहितनासिकयोच्चार्यमाणानां ग्रहणं सिध्यति चेदपि केवलं मुखवचनानामपि संज्ञा प्राप्नोती । तस्मात् मुखग्रहणमेव प्रत्याख्येयम् ।

**प्र.सू.स्व :-** नासिकावचनोऽनुनासिकः[1] ।

## ४. नाज्झलौ

**सूत्रार्थः :-** आकारसहितः अच् आच्, स च हल्च इत्येतौ मिथः सवर्णौ न ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** "तुल्यास्यप्रयत्नं सवर्णम्" इत्यनेन ताल्वादिस्थानम् आभ्यन्तरप्रयत्नश्च येन वर्णेन यस्य वर्णस्य तुल्यं वर्तते तयोः परस्परं सवर्णसंज्ञा अदायि । तदनुरोधेन अनयोर्मिथः सवर्णसंज्ञा प्राप्ता । अहकारयोरपि स्थानं कण्ठः, प्रयत्नश्च विवृतः । तस्माद्धेतोः सवर्णसंज्ञा प्राप्ता । प्राप्तायाञ्च सवर्णसंज्ञायां दोषः सम्भवतीति कृत्वा तयोर्मिथः सावर्ण्यस्य निषेधार्थं वचनमारभ्यते ।

तेन विश्वपाभिः इत्यत्र झलि परेऽपि "हो ढः" इति सूत्रेण ढत्वं न भवति । सूत्रस्यास्याभावेऽपि सर्वे दोषाः परिहर्तुं शक्याः । अत्र च समग्रमेव सूत्रं प्रत्याख्यातम् । स्वरवर्णनाम् ऊष्मणाञ्च प्रयत्नभेदं सम्पादयित्वा सावर्ण्यनिषेधः

---

[1] भा.पु.स. १ भा.पृ.स. २३७

स्वरसतया सम्पाद्यते । तथाहि - स्पृष्टं स्पर्शानां करणम् । ईषत्स्पृष्टमन्तस्थानाम् । विवृतमूष्मणां स्वराणाञ्चेत्यत्र विवृतमूष्मणामित्युच्यते । ईषत्स्पृष्टमन्तस्थानामित्यत ईषदित्यनुवर्तते । एवञ्च ईषद्विवृतमूष्मणामिति सिद्धम् । तदनन्तरं विवृतं स्वराणामिति । ईषदिति नानुवर्तते । ऊष्मणान्तावत् ईषद्विवृतमिति प्रयत्नः । स्वराणाञ्च विवृतम् । तस्मात् प्रयत्नभेदात् सावर्ण्यप्राप्तिरेव नास्तीति कृत्वा प्रतिषेधोऽपि न कर्तव्यः ।। अथवा वाक्यापरिसमाप्तेर्वा सावर्ण्यप्रतिषेधः सिद्धः । वर्णानामुपदेशः तावत् भवति । अर्थात् प्रथमं वर्णोपदेशः । उपदेशोत्तरकालमित्संज्ञा, इत्संज्ञोत्तरकालम् "आदिरन्त्येन सहेता" इति प्रत्याहारः, प्रत्याहारोत्तरकालं सवर्णसंज्ञा, सवर्णसंज्ञोत्तरम् अणुदित्सवर्णस्येति सवर्णग्रहणम् । एतेन सर्वेण वाक्येन समुदितेन अन्यत्र सवर्णानाङ्ग्रहणम् । न तु स्वस्मिन् नापि स्वाङ्गे । नन्वत्र वाक्ये "नाज्झलौ" इति सूत्रं नास्तीति कृत्वा "नाज्झलौ" इति सूत्रस्थाज्ग्रहणेन हलोऽपि गृह्यन्ते । तस्मादज्झलोस्सवर्णसंज्ञा प्राप्ता खल्विति नाशङ्कनीयम् । तुल्यास्यप्रयत्नमित्युत्सर्गस्य ज्ञानार्थम् अपवादभूतस्य "नाज्झलौ" इत्यस्य ज्ञानं नितान्तमपेक्षितमिति कृत्वा वाक्येऽन्तर्भूतमेवेत्यतः न दोषः[1] ।

[1] भा.पु.स. :- १ भा.पृ.स.:- २५३

## ५. बहुगणवतुडति संख्या

**सूत्रार्थः :-** बहुगण इत्येतौ शब्दौ, वतुडतीति प्रत्ययौ च संख्यासंज्ञां प्राप्नुतः।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम्[1] ।

**प्र.क :-** अत्र सूत्रे बह्वादीनां सङ्ख्यासंज्ञा विज्ञायते । येन च "तस्य पूरणे डट्" इति सूत्रेण सङ्ख्यायाः पूरणे डट्प्रत्ययः प्राप्नोति । तदनन्तरञ्च बहुगणशब्दयोः "बहुपूगगणसङ्घस्य तिथुक्" इत्यनेन डटि परे तिथुकि, "वतोरिथुक्" इति डटि परे इथुकि, डत्यन्तस्य च डटि परे "षट्कतिकतिपयचतुरां थुक्" इति थुकि क्रमात् बहुतिथः, गणतिथः, यावतिथः, कतिथः इति सिध्यति । वस्तुतो "वतोरिड् वा" इति ज्ञापकात् बह्वादीनां संख्यासंज्ञां विनापि सर्वं प्रयोजनं साधयितुं शक्यम् ।

"वतोरिड् वा" इत्यस्य वत्वन्तात् कन इड्वा स्यात् इत्यर्थः ।

"संख्याया अतिशदन्तायाः कन्" इति संख्यायाः कन् विहितः । वत्वन्तात् संख्याया एव कन इड्विधीयते विकल्पेन । यदि वत्वन्तस्य संख्या संज्ञा न स्यात् तर्हि इड्विकल्पो व्यर्थः स्यात् । वत्वन्तस्य "वतोरिड् वा" इति संख्यायामेव कन इड्विकल्पो ज्ञापयति स्वतो वत्वन्तस्य संख्यासंज्ञा वर्तत इति । येन च वतः ग्रहणं न कर्तव्यम् । तत्र च योगापेक्षं ज्ञापकं स्वीक्रियते । योगान् अपेक्ष्य ज्ञापकं

---

[1] भा.पु.स. १ भा.पृ.स. ३१०

केषाञ्चित्तु अभिप्रायो वर्तते अत्र डति इति सूत्रं कार्यं, यतो हि उत्तरत्र सूत्रे डतिचेत्यत्र तत्प्रत्याख्यानावसरे भाष्यकारैः अनुवृत्तिः उक्तास्ति । परन्तु सूत्रमिदमेव न कार्यं डति चेति कर्तव्यमिति प्रतिभाति । यतो हि प्रकृते ज्ञापकत्वमाश्रित्य सूत्रस्थदलानि प्रत्याख्याय संख्यासंज्ञाया विधेयत्वं नास्तीत्युक्तं भाष्यकारैः । तद्भाष्ये एव अधिकं प्रामाण्यं निधाय डतिचेति सूत्रमेव भवतु, इह तु संपूर्णमेव सूत्रं प्रत्याख्येयम् ।

योगापेक्षं ज्ञापकम् । ते च योगाः – “बहुपूगगणसङ्घस्य तिथुक्” इति परे एव तिथुक् विहितः । इट् च संख्याया एव विहितः । बहुगणसङ्घयोश्च तिथुक् डटिपरे एव भवतीति बोधकात् “बहुपूगगणसङ्घस्य तिथुक्” इति सूत्रात् बहुगणसंख्ययोः स्वतः संख्यात्वं विज्ञायते । एवं वत्वन्तात् डटि परे एव इथुक् विहितः । इट् च संख्याया एव । तस्मादपि वत्वन्तस्य स्वतः संख्यात्वं विज्ञायते । तुल्यन्यायेनैव डत्यन्तस्यापि षड्कतिकतिपयेत्यादिसूत्रेण स्वतः संख्यात्वमिति सूत्रमिदं भाष्यकारैः प्रत्याख्यातम् [1]।

## ६. विभाषा दिक्समासे बहुव्रीहौ

**सूत्रार्थः :-** दिक्समासे बहुव्रीहौ सर्वनामता वा स्यात् ।

**प्र.अ :-** बहुव्रीहिग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** “न बहुव्रीहौ” इति सर्वत्र निषेधे प्राप्ते दिक्समासे प्राप्त्यर्थं सूत्रे दिक्समासयोर्ग्रहणम् । अथ बहुव्रीहिग्रहणं किमर्थमित्याशङ्क्य द्वन्द्वे दक्षिणोत्तरपूर्वाणामित्यत्र माभूदित्येतदर्थमित्युक्तम् । ननु चात्र “द्वन्द्वे च” इत्यारम्भो बाधको भवति ।अवश्यप्राप्तावेवारब्धो बाधको भवति। अत्र न तथा ।

---

[1] यद्यप्यत्र संख्यासंज्ञा ज्ञाप्यत इति बहवोऽभिप्रयन्ति, अथापि एतत्सूत्रकैयटानुरोधेन ममापि प्रकृतकार्योद्देश्यत्वमात्रं संपाद्यते न तु संख्यासंज्ञा इति सर्वात्मना ज्ञाप्यते । उक्तं च कैयटे – “यदयं बहुपूगगणसंघस्य तिथुक्, वतोरिथुक्, षड्कति, इति डटिपरत आगमं शास्ति, तज्ज्ञापयति- भवति संख्याकार्यमिति” इति । अस्मात् कृत्रिमसंख्यासंज्ञायाः अभावात् 'उभयगतिरिह भवति' इति परिभाषायाः अवतरणम् एतद्विषये न तावत् समञ्जसमिति प्रतिभाति ।

द्वन्द्वे चेति प्राप्ते चाप्राप्ते च।यतो "विभाषा जसि" इत्यस्य द्वन्द्वे पाक्षिकप्राप्तेः सत्वात्।अथवा "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति परिभाषया "दिङ्नामान्यन्तराले" इति प्रतिपदोक्त एव ग्रहीष्यत इति ततो न दोषः । उत्तरार्थन्तु न । तत्र तु क्रियते एव बहुव्रीहिग्रहणम् । तस्मात् बहुव्रीहिग्रहणं न कार्यम् ।

**प्र.सू.स्व :-** विभाषा दिक्समासे[1] ।

## ७. न बहुव्रीहौ

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** संज्ञोपसर्जनीभूतास्तु न सर्वादयः । तस्मात् सूत्रमिदं बहुव्रीह्यवयवे सर्वनामतानिवारणार्थम् । त्वकं पिता यस्य सः त्वत्कपितृकः, अहकं पिता यस्य सः मत्कपितृकः इति । यद्यत्र सर्मनामता स्यात् तर्हि अकच् विग्रहे प्रवर्तेत । स च समस्तेऽपि श्रुतः स्यात् । तद्वारणार्थमिदमिति । त्वकं पिता यस्य सः त्वकत्पितृकः, अहकं पिता यस्य सः मकत्पितृकः इत्येव साधुरित्युक्त्वा एतत्सूत्रं प्रत्याख्यातं भाष्यकारैः । 'उत्तरोत्तरं मुनीनां प्रामाण्यम्' । तस्मात् बहुव्रीहौ चिकीर्षिते सर्वनामताया निषेधस्य अनिष्टत्वात् सूत्रमिदं प्रत्याख्यातमाकरे । तथाहि –

---

[1]भा.पु.स.१ पृ.स.३३६

गोनर्दीयस्त्वाह – 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयम्। त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिति' [1]॥

## ८. अन्तरं बहिर्योगोपसंव्यानयोः

**सूत्रार्थः :-** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या संज्ञा प्राप्ता सा जसि वा।

**प्र.अ :-** उपसंव्यानग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** बाह्ये परिधानीये चार्थे अन्तरशब्दस्य या संज्ञा प्राप्ता सा जसि वा स्यात् । अन्तरे अन्तरा वा गृहाः - बाह्या इत्यर्थः । अन्तरशब्दस्य बाह्यार्थत्वात् जसि पूर्वोक्तायाः संज्ञाया विकल्पेन प्रवृत्तिः । तस्मात् अन्तरे अन्तरा इति सिद्धम् । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः । अत्रान्तरशब्दस्य परिधानीयार्थत्वात् जसि परे विकल्पे सिद्धे अन्तरे अन्तरा इति सिद्ध्यति ।

उपसंव्यानग्रहणं भाष्ये प्रत्याख्यातम् । तथाहि – बहिर्योगशब्देनैव उपसंव्यानशब्दस्य गतार्थता इति कृत्वा पुनरुपसंव्यानशब्दः सूत्रे न पठनीयः । बहिर्योगो द्विधा – अनावृतप्रदेशोपि बहिः, बाह्योपि बहिः । यस्मिन्देशे ग्राम इति व्यवहारः ततोऽपि बहिर्भूतः देशः बहिरित्युच्यते । तादृशेन बाह्येन योगो बहिर्योगः । तादृशबहिर्योगो ग्रामाद्बहिस्स्थितानामेव भवति । तस्मात् अन्तरे गृहा इत्युक्ते बाह्या इत्यर्थः । यदा बहिश्शब्देन ग्रामप्रदेशाद्बहिर्भूतदेशो गृह्यते तदा

---

[1] भा.पु.स.१ पृ.स.३३९

ग्रामाभ्यन्तरे ये गृहाः त उच्यन्ते । एवञ्च अनावृतदेशेन योगो बहिर्योगः । बाह्येन योगो बहिर्योग इति सिद्धम् ।

उपसंव्यानशब्दोऽपि व्युत्पत्तिभेदात् द्विधा । उपसंवीयते अनेनेति उपसंव्यानशब्द उत्तरीयपरः । उपसंवीयते यदिति उपसंव्यानशब्दोऽन्तरीयपरः । एवं च उभयोरपि उत्तरीयान्तरीययोरुपसंव्यानत्वम् । शरीराद्बाह्यप्रदेशे स्थित अन्तरीयो बाह्य इति कथ्यते । तेन योग इति द्वितीयबहिर्योगशब्देन गतार्थता । यदा तु अन्तरीयपरः स्वीक्रियते तदानावृतदेशेन बाह्येन योग इति व्युत्पत्त्या गतार्थता । अन्तरीयेन अनावृतत्वात् । तस्मादभीष्टद्वयमप्येकेन सिद्धम् । एवं च बहिर्योगशब्देन गतार्थता इति कृत्वोपसंव्यानग्रहणं न कार्यम् ।

**प्र.सू.स्व :-** अन्तरं बहिर्योगे [1]।

## ९. तद्धितश्चासर्वविभक्तिः

**सूत्रार्थः :-** यस्मात्तद्धितात्सर्वा विभक्तिर्नोत्पद्यते स तद्दितान्तोऽव्ययसंज्ञः स्यात् ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** "इयमपि च महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् ? लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत् प्रयोजनम् - अन्वर्थसंज्ञा यथा विज्ञायेत - न व्येतीत्यव्ययम् इति ।

---

[1] भा.पु.स.१ पृ.स.३४४

'स्त्रीपुन्नपुंसकानि, सत्वगुणाः, एकत्वद्वित्वानि च । एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति । ये न वियन्ति तदव्ययम्' । 'सदृशन्त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥' एवञ्च सूत्रमिदं न कर्तव्यम्[1]।

## १०. अव्ययीभावश्च

**सूत्रार्थः :-** अव्ययीभावश्च अव्ययसंज्ञः स्यात् ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** अव्ययीभावसमासस्य अव्ययसंज्ञार्थमिदमारभ्यते । तस्य प्रयोजनानि तावत्-

"अव्ययीभावस्य अव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचाराः" इति । लुक् मुखस्वरश्च उपचारश्च इति इतरेतरो द्वन्द्वः । लुगित्यनेन अव्ययादाप्सुपः इति सूत्रेण विधीयमानः लुक् गृह्यते । मुखस्वर इत्यनेन मुखशब्दान्तस्य विधीयमानः स्वरो गृह्यते । तेन मुखस्वरप्रतिषेधः लक्ष्यते । उपचार इत्यनेन अतः कृकमि इत्यनेन विधीयमानं विसर्गस्थानिकं सत्वं गृह्यते । तस्मादेतत्सूत्रं कर्तव्यत्वेन प्राप्तम् । यद्येतान्येवास्य प्रयोजनानि भवन्तीति परिगण्यते तर्हि नार्थोऽनेन योगेन । लुगर्थं सूत्रं नारब्धव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति अव्ययीभावात् सुपो लुक् भवतीति । यदयं नव्ययीभावादतोम्त्वपञ्चम्याः इति अदन्तादव्ययीभावात् सुपः

---

[1]भा.पु.स.१ पृ.स.३५५

लुङ्निषेधं कुर्वन् तत्र अमादेशं शास्ति । तज्ज्ञापयत्याचार्यः अव्ययीभावात् परस्य सुपः लुक्भवतीति ।

अथ उपपयःकारः, उपपयःकामः इत्यत्र अतः कृकमि इति सत्वनिषेधोऽपि नास्य फलम् । तथाहि – सत्वविधायके सूत्रे अनुत्तरपदस्थस्येति पदं वर्तते । तेन अनुत्तरपदस्थस्यैयव विसर्गस्य सत्वप्राप्तिः । प्रकृते च विसर्गस्य पयोरूपोत्तरपदस्थत्वेन तत्र सत्वस्य प्राप्तिरेव नास्ति । तस्मात् यदि प्रयोजनं तर्हि उपाग्निमुख इत्यादौ मुखं स्वाङ्गम् इति स्वरनिषेध एकमेव प्रयोजनम् । नह्येकं प्रयोजनं योगारम्भं प्रयोजयति । "यद्येतावत् प्रयोजनं स्यात् तत्रैवायं ब्रूयत् – 'नाव्ययादव्ययीभावाच्च' इति" । सामान्यलक्षणमेकं प्रयोजनं मनसि निधाय न कार्यमित्यर्थः[1]।

## ११. नवेति विभाषा

**सूत्रार्थः :-** निषेधविकल्पयोः विभाषासंज्ञा स्यात् ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** नवेति विभाषा इत्यारम्भपक्षे तावत् श्रुतक्रमानुरोधेन प्रथमं नेत्यंश उपतिष्ठते । तदुपस्थितौ सर्वत्र निषेधे सिद्धे पुनर्वाशब्दो विकल्पसाधनार्थः, येनोभयत्र विभाषा सिध्यति । नवेति विभाषा इत्यत्र महत्याः संज्ञायाः करणसामर्थ्यात् निषेधविकल्पयोरुभयोरपि विभाषासंज्ञा सिद्धा भवति । येन

[1] भा.पु.स.१ पृ.स.३६८

श्वयतेर्लिटि, तिपि, अकित्वात् संप्रसारणमप्राप्तम्, अपिति किति सम्प्रसारणं प्राप्तमिति अवस्थायां प्रथमं सूत्रक्रमानुरोधेन निषेधे, सर्वत्र सम्प्रसारणाभावे सिद्धे, ततो विकल्पो भवति, नभवति इत्येवंरूपः प्रवर्तते । तस्मात् शिश्वाय-शुशाव, शिश्वियतुः-शिशुवतुरिति सिद्धम् । एवञ्च यत्र प्राप्ताप्राप्तविभाषा तदैवास्य सूत्रस्य प्रवृत्तौ प्रामुख्यं स्थानम् ।

यदा तु प्रतिलक्ष्यं लक्षणभेदेनैव विवक्षा क्रियते पिति अकिति अप्राप्तांशः केवल इति, एवं किति अपिति प्राप्तांशः केवल इति च प्रकृतसूत्राकरणत्वमुक्तम् । तथा च वार्तिकम् -"अशिष्यो वा विदितत्वात्" 'आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैरेतमर्थं सम्प्रत्याययति – बहुलम्, अन्यतरस्याम्, उभयथा, वा, एकेषाम् इति' एवं च सूत्रं नावशिष्यते[1] ।

## १२. एच इग्घ्रस्वादेशे

**सूत्रार्थः :-** ह्रस्वादेशशासनेषु एच इक एव भवन्तीत्यर्थः ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** किमर्थम् इदमुच्यते इति प्रश्ने वार्तिकम्- "एचः इग्वचनं सवर्णाऽकारनिवृत्यर्थम्" । अकारस्य सवर्णस्य च निवृत्तिर्यथा स्यादित्येतदर्थं क्रियते एच इग्वचनम् । एचो ह्रस्वादेशशासनेषु अर्ध-एकारो वा अर्ध-ओकारो वा माभूदिति ॥

[1] भा.पु.स.१ पृ.स.३८०

एचौ समाहारवर्णौ । मात्रा अकारस्य मात्रा इवर्णोवर्णयोः । तत्र ह्रस्वे । विधीयमान अकारः कदाचिदपि न स्यात् इत्येतदर्थं हि इग्घ्रस्ववचनम् ।

सवर्णनिवृत्तिरिति धिया तावत् इग्वचनं न कार्यम् । तदुक्तं वार्तिकेन- "सिद्धम् एङः सस्थानत्वात्" इति । सस्थानौ इकारोकारौ ताल्वोष्ठस्थानत्वात् । एकारस्य तालुस्थानत्वात् तालव्य इकारो भवति । एवमोकारस्य ओष्ठस्थानत्वात् तत्समानस्थानिक उकारो भवति । एवञ्च सवर्णनिवृत्यर्थं तावदेच इग्वचनं न कार्यम् । कदाचित्प्राप्यमाणाकाराभावसाधनार्थमपि नारब्धव्यम् । तथाहि वार्तिकम् - "ऐचोश्चोत्तरभूयस्त्वात्" इति । समाहारवर्णौ यौ ऐकारौकारौ तयोर्भूयसी मात्रा इवर्णोवर्णयोरित्यतः भूयस एव ग्रहणानि भवन्तीति कृत्वा इवर्णोवर्णावेव भवतः । तस्मात् सूत्रमिदं प्रत्याख्यातम्[1]।

## १३. स्थानेऽन्तरतमः

**सूत्रार्थः :-** प्रसङ्गे सति सदृशतम आदेशः स्यात् ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** एकस्य स्थानिन अनेकादेशप्रसङ्गे सति यः स्थान्यर्थगुणप्रमाणतः स्थानिना सदृशतमः स एवादेशो भवतीत्येतदर्थं सूत्रमिदमारभ्यते । परमिदं सूत्रन्नापेक्षितं स्वभावसिद्धत्वात् । यथा समाजेषु समासेषु समवायेषु

---

[1] भा.पु.स.१ पृ.स.४०७

आस्यतामित्युक्ते नैव कृशाः कृशैरेव एवं पाण्डवाः पाण्डुभिरासते । येषां तावदर्थकृतमान्तर्यं वर्तते तैरेव आसते । तस्मादत्रापि यः स्वभावतः स्थानार्थगुणप्रमाणैः स्थान्यर्थाभिधाने समर्थः तस्यैव आदेशो भवति । तस्मादिदं सूत्रं नारम्भणीयम्[1]।

## १४. स्थानिवदादेशोऽनल्विधौ

**सूत्रार्थः :-** आदेशः स्थानिवत् स्यात् न तु स्थान्यलाश्रयविधौ ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** सूत्रमिदं प्रत्याख्यातम् । तथाहि - सूत्रस्यास्य प्रयोजनं किम्? किमर्थमिदमारभ्यते? इति प्रश्नपूर्वकं प्रत्याख्यातमाकरे । तदुक्तं प्रयोजनं वार्तिकेन - "स्थानिवदादेशपृथक्त्वात् आदेशे स्थानिवदनुदेशो गुरुत्वात् गुरुपुत्रे यथा" इति । स्थान्यादेशयोः पृथक्त्वात् स्थानिकार्यम् आदेशे न प्राप्नोति । तद्यथा स्यात् स्थानिकार्यमादेशः प्राप्नुयादित्येतदर्थमिदं सूत्रमारम्भणीयम् । यथा गुरुवत् गुरुपुत्रे वर्तितव्यमिति उच्यते तद्वत् । स्थानिकार्यमादेशे न भवति चेत्को दोष इति चेत् – "आङो यमहन" इत्यात्मनेपदं हन्तेरेव स्यात् । न तु तदादेशवधेरपि इत्युक्तम् ।

इदञ्च प्रयोजनम् उपाध्यायस्य शिष्यो याज्यकुलानि गत्वा अग्रासनादि प्राप्नोतीति लोकतः प्रसिद्धम् । तस्मात्सूत्रमिदं नारम्भणीयम् । लोके

---

[1] भा.पु.स.१ पृ.स.४२०

तावदयं दृष्टान्तः । शास्त्रेऽस्य स्वीकारे किञ्चिन्मानमस्ति किम् इति प्रश्ने आह - “युष्मदस्मदोरनादेशे” इति सूत्रे यदनादेशे इति प्रतिषेधं शास्ति तदत्र मानम् । तथाहि - युष्मदस्मदोराकारस्य आदेशो भवति अनादेशे इति हि सूत्रार्थः । यद्यादेशे स्थानिकार्यं न स्यात् तर्हि युष्मदस्मदोरुच्यमानं कार्यं सादेशयोः न प्राप्नोतीत्यत अनादेशे इति प्रतिषेधो नारम्भणीयः । आरब्धो निषेधो ज्ञापयति आदेशः स्वतः स्थानिवद्भवतीति । तत आदेशस्य स्थानिवद्धर्मसिध्या सादेशयोः युष्मदस्मदोरपि आकारादेशः स्यात् । तस्मात् तद्व्यावृत्तये प्रतिषेध आरम्भणीयः । एवं च स्वत एव स्थानिधर्मप्राप्तौ सूत्रमिदं प्रत्याख्यातम् [1]।

### १५. न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ।

**सूत्रार्थः** :- पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्त अजादेशो न स्थानिवत् ।

**प्र.अ** :- पदान्त-द्विर्वचन-सवर्ण-अनुस्वार-दीर्घ-जश्विधि-चर्विधिरिति प्रत्याख्यातम् ।

**प्र.क्र :-** ‘पूर्वत्रासिद्धे न स्थानिवत्’ इति वार्तिकम् । तत्र च सवर्णानुस्वारदीर्घादयः साहचर्यात् त्रैपदिका एव गृह्यन्त इति कृत्वा पूर्वत्रासिद्धे न स्थानिवत् इतीयता एव असिद्धित्वे सिद्धे पुनः “न

[1] भा.पु.स.१ पृ.स.४४६

पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु" इति सूत्रे पदान्त-द्विर्वचन-सवर्ण-अनुस्वार-दीर्घ-जश्विधि-चर्विधिरित्येतेषां ग्रहणं न कर्तव्यम् ।

**प्र.सू.स्व :-** न वरेयलोपस्वरेषु [1]।

## १६. प्रत्ययलोपे प्रत्ययलक्षणम्

**सूत्रार्थः :-** प्रत्यये लुप्ते तदाश्रितं कार्यं स्यात् ।

**प्र.अ :-** प्रत्यय इति प्रत्याख्यातम् ।

**प्र.क :-** लोपे प्रत्ययलक्षणम् । प्रत्ययग्रहणं किमर्थं क्रियते इति प्रश्ने, अक्रियमाणे प्रत्ययग्रहणे लोपे प्रत्ययलक्षणमिति स्यात् । तदा सौरथिः वैहविः इति गुरूपोत्तमलक्षणः ष्यङ् स्यात् इति दोषः । तथाहि - सुरथस्य विहवस्य च अपत्यं स्त्री इत्यर्थे इञि, अकारलोपे, प्रत्ययलक्षणप्रादुर्भावो भवतीति उच्यते इति कृत्वा सुरथ् अ इ इति त्रिषु अन्त्य इकार उत्तमः । तत्समीपं उपोत्तमम् । तस्य अकारस्य ष्यङ् स्यादिति दोषः ।

अयं दोषो न । लोपे प्रत्ययलक्षणं भवतीत्यस्य प्रत्ययस्य प्रादुर्भाव इति नार्थः । अपितु प्रत्ययलक्षणं - प्रत्ययो निमित्तं यस्य कार्यस्य तत्प्रत्यये लुप्तेऽपि भवतीति तस्मात् न दोषः । अतः प्रत्ययग्रहणं त्यक्तव्यम् इति चेत्प्रयोजनान्तरमाह - प्रत्ययग्रहणेनेदं ज्ञाप्यते - सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणेन यथा स्यात् । लोपोत्तरकालं यत्प्राप्नोति तत्प्रत्ययलक्षणेन माभूत्

---

[1] भा.पु.स.१ पृ.स.४८५

इति । ग्रामणिकुलमित्यत्र उत्तरपदह्रस्वत्वे प्राप्नोति तुक् । स इदानीं न भवति इति प्रयोजनम् । तस्मात् प्रत्ययग्रहणं कर्तव्यम् । यद्यत्र तवोक्तप्रकारेण प्रत्ययग्रहणस्य निरुक्तार्थद्योतकत्वं तर्हि जगत् इत्यत्र तुक् न स्यात् । क्विपः लोपोत्तरं हि तुक् । स न स्यादिति यावत् । "द्युतिगमिजुहोत्यादीनां द्वे च" इति गमेः क्विप् । "गमः क्वौ" इति तस्य लोपः । एवञ्च लोपोत्तरकालिकत्वात् तुक्प्राप्तिः निषिध्यते । अतो निरुक्तार्थो न स्वीकार्यः । भवदुक्तार्थस्वीकारे ग्रामणिकुलमित्यत्र कुतः तुक् न इति चेत् - 'असिद्धम्बहिरङ्गमन्तरङ्गे' इति परिभाषया असिद्धं ह्रस्वत्वम् । तुक् तु अन्तरङ्गः । तस्मान्न तुगाप्नोति । तर्हीदं प्रयोजनम् - समग्रस्य प्रत्ययलोपे एव प्रत्ययलक्षणं यथा स्यात् प्रत्ययस्यैकदेशे लुप्ते माभूत् इति । "प्रत्ययस्य लुक्श्लुलुपः" इति पूर्वस्मिन्नपि योगे प्रत्ययग्रहणमुत्तरार्थमित्युक्त्वा इदमेव प्रयोजनमुक्तम् । अत्र च सूत्रे क्रियमाणप्रत्ययग्रहणस्यापि तदेव प्रयोजनम् । तस्मात् अन्यतरत् त्यक्तुं शक्यम्।

**प्र.सू.स्व :-** लोपे प्रत्ययलक्षणम् [1]।

## १७. स्वं रूपं शब्दस्याशब्दसंज्ञा

**सूत्रार्थः :-** स्वं रूपं शब्दस्य संज्ञी, शब्दशास्त्रे या संज्ञा तां विना ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

[1] भा.पु.स.१ पृ.स. ५०८

**प्र.क :-** स्वं रूपं शब्दस्य संज्ञी, शब्दशास्त्रे या संज्ञा तां विना इति शब्दस्वरूपस्य संज्ञित्वनिर्णयार्थमिदम् । इदं सूत्रं किमर्थमारभ्यत इति प्रश्नं कृत्वा सूत्रस्य प्रयोजनत्रयं व्याख्याय तत्सर्वं प्रयोजनमन्यथैव सम्पाद्य सूत्रमिदं प्रत्याख्यातम् । तथाहि -

प्रथमप्रयोजनम् - अग्निरूपस्य अर्थस्य ढक् प्रत्ययो विधातुं न शक्यते इति कृत्वा यावन्त अग्निवाचकाः तेभ्यः सर्वेभ्यो ढक्प्रत्ययः प्राप्नोति । तन्निषेधार्थमिदं सूत्रमारम्भणीयम् । तदुक्तं वार्तिकेन - "शब्देनार्थगतेः अर्थस्य असम्भवात् तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम्" इति । शब्दपूर्वक एवार्थे सम्प्रत्ययः तस्मात् अर्थनिवृत्तिर्भवति । अग्निरूपस्य अर्थस्य प्राप्तिरेव नास्तीति कृत्वा तद्वाचिनामपि प्राप्तिर्नास्तीति सूत्रमिदं नारम्भणीयम् । तदुक्तं वार्तिकेन "न वा शब्दपूर्वको हि अर्थे सम्प्रत्ययः तस्मात् अर्थनिवृत्तिः" ।

तर्हि अन्यार्थं सूत्रं किन्तर्हीति चेत् - अशब्दसंज्ञा इति उच्यते तस्मात् दाधाघ्वदाप् इत्यादिषु स्वस्य संज्ञा न भवति । एतदर्थं सूत्रमुच्यते इति चेत् वचनप्रामाण्यादेव शब्दसंज्ञायां स्वरूपविधिः न प्रवर्तते । तस्मात् सूत्रमिदं नारम्भणीयम् । तदुक्तं वार्तिकेन - "शब्दसंज्ञाप्रतिषेधानर्थक्यं वचनप्रामाण्यात्" इति । तर्हि मन्त्राद्यर्थं सूत्रमिदं वक्तव्यम् । मन्त्रे, ऋचि, यजुषि च यत्कार्यमुच्यते तन्मन्त्रादीनां शब्दानां माभूत् इति चेत् - शास्त्रस्य सामर्थ्यात् अर्थस्य गतिर्भवति

। एवं मन्त्रादिशब्दानां योऽर्थः तत्रैव कार्यमिति न दोषः । तस्मादपि सूत्रं नारम्भणीयम्[1]।

## १८. अणुदित्सवर्णस्य चाप्रत्ययः

**सूत्रार्थः :-** अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात् ।

**प्र.अ :-** अण्ग्रहणं प्रत्याख्यायते ।

**प्र.क :-** अणुदित्सवर्णस्य चाप्रत्यय इति सूत्रमणादिप्रत्याहारे णकारादिचिन्हेन सवर्णग्रहणार्थम् । अयम् अकारादिः णकारचिन्हितत्वात् अक्षरसमाम्नायिक इति ज्ञायते । तत्र उच्चारिताभेदमाश्रित्य "अस्य च्वौ"(७/४/३२) इत्यादिषु पठितोऽपि गृह्यते इत्युक्त्वा व्यक्तिपक्षमाश्रित्य न गृह्यते इत्याशङ्किते – "सवर्णेऽण्ग्रहणमपरिभाष्यम् आकृतिग्रहणात्" इत्युक्त्वा अण्ग्रहणं प्रत्याख्यातम् । तथाहि - अवात्तामित्यादिषु अवात् स् ताम् इति स्थिते व्यक्तिपक्षस्वीकारे झल्त्वमेकत्रैव सिध्यति । बहुषु तत्वाभावात् "झलो झलि"(८/२/२६) इति सलोपो न स्यात् । जातिपक्षाश्रयणे तु निरुक्तो दोषो नेति जातिपक्ष आश्रितः । जातिपक्षाश्रयणे सर्वत्र तज्जात्यवच्छिन्नस्य ग्रहणं भविष्यतीत्यतः वर्णः गृह्यमाणः स्वजात्यवच्छिन्नं सर्वं गृण्हातीत्यतः ग्राहकत्वं पुनर्न विधातव्यम् । तस्मात् अण्ग्रहणं न कर्तव्यम् ।

---

[1] भा.पु.स.१ पृ.स.५४८

**प्र.सू.स्व :-** अणुदित्सवर्णस्य चाप्रत्ययः [1]।

**द्वितीयः पादः**

## १९. इन्धिभवतिभ्यां च

**सूत्रार्थः :-** आभ्यां परो लिट् कित् ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** संयोगात् “असंयोगाल्लिट् कित्” इति कित्वाप्राप्ते कित्वार्थम् इन्धिग्रहणम् । अपित्सार्वधातुकं ङिद्वत् इत्यप्राप्ते कित्वे पित्यपि कित्वार्थं भवतेर्ग्रहणम् । एवञ्च सँय्योगवतोऽपि इन्धेः कित्वसत्वात् “अनिदितां हल उपधायाः क्ङिति” इति नलोप ईधे इति सिध्यति । बभूव इत्यत्र णलः णित्वमाश्रित्य बभू अ इत्यवस्थायाम् “अचो ञ्णिति” इति प्राप्ता या वृद्धिः सा कित्वात् निषिध्यते । एवञ्च ईधे इत्यत्र कित्वप्राप्तिपूर्वकं नलोपार्थम् , एवं बभूव इत्यत्र कित्वप्राप्तिपूर्वकं वृध्यभावसंपादनार्थमिदमिति चेदाह – योगोऽयं नारभ्य इति । कथं तर्हि ईधे, बभूव इत्यादि वैदिकाः प्रयोगाः सङ्गच्छन्त इति चेत् – इन्धेः छन्दोविषयत्वात् भुवो वुगो नित्यत्वादिति । इन्धेः तावत् छन्दोविषयत्वमेव । तस्मात् दृष्टानुविधिः भवति

[1] भा.पु.स.१ पृ.स.५५६

। भवतेस्तु वुङ्नित्यः । तस्मात् वुगेव नित्यं प्रवर्तते । तस्मादिदं सूत्रं नारम्भणीयम्[1]।

## २०. स्थाघ्वोरिच्च

**सूत्रार्थः :-** अनयोः इदादेशः स्यात् इच्च कित्स्यात् ।

**प्र.अ :-** तपरकरणं प्रत्याख्यायते ।

**प्र.क्र :-** तपरकरणस्य प्रयोजनं तावत् दीर्घनिवृत्तिः । परन्तु "घुमास्थागापाजहातिसां हलि" इत्यनेन अवश्यं दीर्घो भवति । तस्मात् ऋते तपरकरणे क्रियमाणेऽपि दीर्घः सिद्ध्यति । अस्तु तर्हि प्लुतो माभूदित्येतदर्थमिति तपरकणं चेत् प्लुतश्च विषये स्मृतः इत्यतो न दोषः । विषये स्मृतः इत्यत्र विषयो नाम प्रश्नाख्यानादिः इत्यर्थः । यदा स विषयो भवति तदा अनेनैव सूत्रेण प्लुतो विधीयते इति चेत् अनन्त्यस्यापि प्रश्नाख्यानयोः इति सूत्रानुवादभिया अनेन प्लुतो न विधीयते । तस्मात्तपरकरणं न कार्यम् ।

**प्र.सू.स्व :-** स्थाघ्वोरि च [2]।

---

[1] भा.पु.स.२ पृ.स.७

[2] भा.पु.स.२ पृ.स.१४

## २१. न क्त्वा सेट्

**सूत्रार्थः** :- सेट् क्त्वा किन्न स्यात् ।

**प्र.अ** :- सूत्रेऽस्मिन् क्त्वाग्रहणं प्रत्याख्यातम् ।

**प्र.क** :- शीङ् स्वप्ने इति धातोः क्त्वा प्रत्यये शि त्वा इति स्थिते क्त्वः । कित्वात् गुणनिषेधे प्राप्त अयं क्त्वा सेडिति कृत्वा अकित्वातिदेशेन गुणनिषेधाभाव अयादेशे च शयित्वेति सिद्धम् । अत्र सूत्रे क्त्वाग्रहणं मास्तु । केवलं क्त्वा सेट् इति सूत्रं भवतु इत्याशय उक्तः । तदनु अतिव्याप्तयो दर्शिताः परिहृताश्च ।

यदि न सेडिति सूत्रं स्यात् तदा इटा सहितस्य कित्वनिषेधो भवतीति सूत्रार्थात् गुधित इत्यत्रापि क्त्वः सेट् इति कृत्वा कित्वाभावात् गुध्-धातोरुपधागुणः स्यात् । तस्मात् क्त्वाग्रहणं सूत्रे कर्तव्यमिति चेत् – आह निष्ठायामवधारणात् । निष्ठायामवधारणादतिव्याप्तिर्नास्ति । शीङ्स्विदिमिदिक्ष्विदिधृषामेव परा निष्ठा किन्नेति नियमात् एतेभ्योऽन्ये ये तेषां तावत्कित्वात् गुणनिषेधः सिध्यति । तस्मान्न सेडिति सूत्रमुचितमिति ।

पुनराशङ्का – न सेडिति केवले सूत्रे क्रियमाणे पपिव, पपिम इत्यादिषु वस्मसोः इत्सहितत्वात् कित्वाभावात् आकारलोपो न स्यात् । तस्मात् क्त्वैव किन्नेति वक्तव्यमिति चेत् न । पपिव, पपिम इत्यादिषु “आतो लोप इटि च” इति इटि परे यो लोपः स प्राप्नोति । ततो न लोपः।

नन्वेवं जग्मिव इत्यत्र वसः सेट्त्वात् कित्वाभावात् , गम् धातोः कित्परकत्वाभावात् “अनिदितां हल उपधायाः क्ङिती”ति उपधालोपो न प्राप्नोति

इति चेदाह – ज्ञापकात् जग्मिवेत्यत्र दोषो वार्यते । तथाहि – "इको झल्"(१/२/९) इति सूत्रेण इगन्तात् झलादिस्सन् कित् इति कित्वमतिदिश्यते । इगन्तात्परस्य झलादेस्सनः कित्वविधानं ज्ञापयति – न सेडिति सूत्रेण औपदेशिकस्यैव कित्वनिषेधो नातिदेशिकस्येति । जग्मिवेत्यत्र तु वसः कित्वं न औपदेशिकं किन्तु आतिदेशिकमेव । तस्मान्निषेधो न प्रवर्तते । निषेधाभावे कित्वादुपधालोपः सिद्ध्यति । कथं तर्हि ज्ञापकत्वमिति चेत् – कित्वं द्विविधम् । औपदेशिकम् आतिदेशिकमिति । "इको झल्" इत्यत्र झल्ग्रहणं कुतः क्रियते इति चेत् शिशयिषते इत्यादिषु गुणनिषेधो माभूदिति । तत्र च सन इडागमोऽभूदिति कृत्वा झलादित्वाभावेन "इको झल्"इति सूत्रविषयत्वाभावात् गुणः सिद्ध्यति । यदि न सेडिति सूत्रेण यथा औपदेशिकस्य कित्वस्य निषेधः तद्वत् आतिदेशिकस्यापि निषेधः क्रियेत तर्हि "इको झल्"इति सूत्रे झल्ग्रहणं व्यर्थं स्यात् । तथाहि – शिशयिषत इत्येतदर्थं झल्ग्रहणम् । प्रकृते सन् इडादिरिति कृत्वा सेड्भवति । सेडिति कृत्वा न सेडिति सूत्रेण कित्वनिषेधे सिद्धे केवलम् इक इति सूत्रमलम् । तस्मात् इणन्तात्परः सेट् न किदित्येतावतैव शिशयिषत इत्यादि सिद्धौ झल्ग्रहणं व्यर्थं सत् ज्ञापयति औपदेशिकस्यैव कित्वस्य निषेधो न तु आतिदेशिकस्येति । प्रकृते च सन औपिदेशिककित्वाभावात् निषेधो न भवति । तस्मात् कित्वसत्वात् शिशयिषत इत्यादिषु गुणनिषेधः प्राप्नोति । प्राप्ते झल्ग्रहणं निरुक्तक्रमेण चरितार्थं भवति । जग्मिव इत्यत्र तावत् न सेडितीयति क्रियमाणेऽपि न दोषः । तस्मात् न सेडित्येव उचितम् । यत्र क्तिन्प्रत्यस्य सेड्वं

वर्तते निगृहीतिः, उपस्निहितिः, निकुचितिः इत्यादिषु, तत्र न सेडिति सूत्रविषयत्वमागतम् । तस्मात् कित्वनिषेधे गुणोऽनिष्टः प्रसज्येत । अतो वा न क्त्वा सेडित्येव वक्तव्यमिति सिद्धे योगविभागात् सिद्धमित्युक्त्वा क्त्वाग्रहणस्य प्रत्याख्यानमुक्तम् । तथा च – "न क्त्वा सेट्" "निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" "मृषस्तितिक्षायाम्" ततः "पूङः क्त्वा च" इति सूत्रे पूङ इति योगविभागः क्रियते । पूङ इति प्रथमो योगः । निष्ठा इत्यनुवर्तते सेडिति च । तस्मात् पूङः सेण्निष्ठा किन्न इत्यर्थो लभ्यते । ततः क्त्वा च इति योगः । पूङ इति नानुवर्तते । क्त्वा च सेट् किन्न भवति इत्यर्थः । तस्मात्सर्वे दोषाः परिहृताः । ततश्च क्त्वाग्रहणं न कार्यम् ।

**प्र.सू.स्व :-** न सेट् [1]।

## २२. तस्यादितमुदात्तमर्धह्रस्वम्

**सूत्रार्थः :-** स्वरितस्वरस्यादौ अर्धह्रस्वमात्रमुदात्तं शेषम् अनुदात्तं भवति ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम्[2] ।

---

[1] भा.पु.स.२ पृ.स.१७

यद्यपि पूङः क्त्वा च इति सूत्रप्रत्याख्यानावसरे इहस्थक्त्वाग्रहणमेव आदृतम् अथापि तत्र क्त्वा ग्रहणस्योत्तरत्र अनुव्रुत्तेः अपेक्षिततत्वात् इहस्थमेव प्रत्याख्येयम् ।

[2] भा.पु.स.२ पृ.स.२९

**प्र.क्र :-** उदात्तानुदात्तयोः समाहारात्मकेऽस्मिन् स्वरिते कः कियन्तं भागमाक्रामतीति प्रतिपादनायैतत्सूत्रं प्रवृत्तम् । परन्त्वामिश्रीभूतमेवेदं भवति – तद्यथा – क्षीरोदके सम्पृक्ते आमिश्रीभूतत्वान्न ज्ञायते – कियत् क्षीरम्, कियदुदकमिति, कस्मिन्नवकाशे क्षीरम्, कस्मिन्वोदकमिति । एवमामिश्रीभूतत्वात् न ज्ञायते – कियदुदात्तम्, कियदनुदात्तम्, कस्मिन्नवकाशे उदात्तम्, कस्मिन्ननुदात्तमिति । तदाचार्यः सुहृद्भूत्वान्वाचष्टे इयदुदात्तमियदनुदात्तमस्मिन्नवकाश उदात्तम्, अस्मिन्नवकाशेनुदात्तमिति । परन्तु पुराकल्पे या पूर्वा विद्या सा अद्यत्वे तूत्तरा । यथा तत्र इदानीं स्थानकरणानुप्रदानानि अनुपदिष्यन्ते, एवमिदमपि नोपदेष्टव्यं भवति । तस्माच्चोक्तं भाष्ये " यद्येवं नार्थोऽनेन । इदमप्युपलब्ध्याधिगमिष्यति" इति । अर्थात् वेदमधीयन्निदमपि अधिगमिष्यतीत्यर्थः । तस्मात् नेदं सूत्रं कार्यम्[1] ।

## २३. अर्थवदधातुरप्रत्ययः प्रातिपदिकम्

**सूत्रार्थः :-** धातुं प्रत्ययं प्रत्ययान्तञ्च वर्जयित्वा अर्थवत् शब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।

---

[1] भा.पु.स.२ पृ.स.२८

अत्र कैयटः – न केवलमिदं सूत्रम् । यावदुच्चैरुदात्त इत्यादि संज्ञाकरणपि मन्दबुद्धिप्रतिपादनार्थम् । सिद्धो हि वेदाध्यायिनां शिक्षायामेवोदात्तादि स्वरव्यवहारः । ( भाष्यकारैः सूत्रव्याख्याने एवमनुपादानात् न मयेदं प्रस्तुतम् )

**प्र.अ :-** अप्रत्ययग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** प्रातिपदिकसंज्ञाविधानार्थं सूत्रमारभ्यते । अत्र चाप्रत्यय इति पर्युदासो न वक्तव्यः । अप्रत्यय इति पर्युदासस्य प्रयोजनं किमिति प्रश्ने काण्डे कुड्ये इत्यत्र परादिवद्भावेन प्रत्ययान्तत्वात् प्रातिपदिकत्वनिषेधो यथा स्यादित्येतदर्थम् इत्युक्तम् । इदञ्च प्रयोजमन्यथासिद्धम् । तथाहि – अग्रिमसूत्रे कृत्तद्धितेति प्रत्ययग्रहणं नियमाय भावति । प्रत्ययान्तस्य चेत् प्रातिपदिकसंज्ञा तर्हि कृत्तद्धितान्तानामेवेति । एवञ्चान्यप्रत्ययान्तानां नियमेनैव व्यावृत्तौ सिद्धायां काण्ड इत्यादौ दोषवारणार्थं सूत्रेऽस्मिन् अप्रत्यय इति नारम्भणीयम् । तस्मात् अर्थवदधातुः प्रातिपदिकम् इति सूत्रम् ।

**प्र.सू.स्व :-** अर्थवदधातुः प्रातिपदिकम् [1]।

## २४. जात्याख्यायामेकस्मिहुवचनमन्यतरस्याम्

**सूत्रार्थः :-** एकोऽप्यर्थो वा बहुवद्भवति ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** एकस्मिन्बहुवचनविधानमयुक्तं वर्तते । यतो हि जातिस्तावात् प्रकारत्वेन भाति, लिङ्गसङ्ख्यानाञ्चान्वयो व्यक्तिषु भवति, व्यक्त्याश्रयत्वाज्जातेः । तत्र च व्यक्तीनाम्बहुत्वात् बहुवचनन्न्यायमेव । तत्र तु यत्नसाध्यन्नाम एकवचनमेव । अत

[1] भा.पु.स.२ पृ.स.४३

इदमयुक्तं वर्तते । नैवेदमयुक्तम्, यतो जात्याख्यायां सामान्याभिधानात् एकत्वन्तावद्भवत्येव । यथा व्रीहौ व्रीहित्वमित्येकमेव । तत्र च एकत्वादेकवचनम्भवत्येव । तत्रापि बहुवचनं स्यादित्येतदर्थं बहुवचनविधानङ्क्रियते । तच्च यत्नमन्तरा न सिध्यतीति "जात्याख्यायामेकस्मिन्-बहुवचनमन्यतरस्याम्" इति आरम्भणीयमेव इति चेत् - न । किं कारणमिति चेत्, पृथक्त्वाभिधानात् । जातिशब्देन हि द्रव्यमप्यभिधीयते व्यक्तिरपि । यदा द्रव्यस्याभिधानन्तदा बहुत्वात् बहुवचनम् । यदा तावज्जातेरभिधानं तदा तस्या एकत्वादेकवचनमेव भविष्यतीति अशिष्योऽयं योगः [1] ।

## २५. अस्मदो द्वयोश्च

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** एकत्वे द्वित्वे च विवक्षित अस्मदो बहुत्वं वा स्यात् । अहं ब्रवीमि – वयं ब्रूमः । आवां ब्रूवः - वयं ब्रूम इति च सिद्ध्यति विकल्पेन । विनापि सूत्रम् इदं सधयितुं शक्यते । इदं मे अक्षि सुष्ठु पश्यति, अनेन अक्ष्णा सुष्ठु पश्यामीत्यादि लोके व्यवहारदर्शनात् कदाचिदिन्द्रियाणां स्वातन्त्र्यं कदाचित्तु पारतन्त्र्यं चावगतम् । तत्र यदा स्वातन्त्र्यावगमो भवति तदा बहुवचनम् । यदातु पारतन्त्र्यविवक्षा तदा एकवचनम् ।

---

[1] भा.पु.स.२ पृ.स.६६

ननु स्वातन्त्र्यविवक्षायाम् इदम्मे अक्षीत्येकवचनं विना बहुवचनं कथमवगम्यते इति चेत् - सर्वेन्द्रियाणां युगपद्व्यापारानङ्गीकारात् एकेन्द्रियव्यापारावस्थायां तावत् अन्यानीन्द्रियाणि गौणानि भवन्ति, तद्गतकर्तृत्वादीनां विवक्षा क्रियत इति कृत्वा बहुवचनं सिद्ध्यतीति कृत्वा अशिष्योयं योगः [1] ।

## २६. फल्गुनीप्रोष्ठपदानां च नक्षत्रे

**सूत्रार्थः :-** द्वित्वे बहुत्वप्रयुक्तं कार्यं न स्यात् नक्षत्रे अभिधेये ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** फल्गुनीसंज्ञके प्रोष्ठपदसंज्ञके च द्वे नक्षत्रे तत्र तयोः द्विवचनान्नित्ये द्विवचने प्राप्ते बहुत्वार्थमयमारम्भः । अत्र च विनापि सूत्रं बहुत्वं साधयितुं शक्यते । तन्नक्षत्रद्वयसमीपे सूक्ष्माणां नक्षत्राणां चन्द्रस्य वा सत्वं यदावगम्यते तदा तेषामपि बोधने अभिमते बहुवचनं, नक्षत्रद्वयमात्रसाधनीयत्वे द्विवचनमिति स्वरसतः सिद्ध्यति । न च चन्द्रस्य वा समीपतरवर्त्यन्यनक्षत्राणां वा फल्गुनीप्रोष्ठपदवाचकत्वाभावात् कथं तत्प्रयुक्तबहुत्वमिति चेदाह यथा अर्धर्चशब्दस्य तद्गतरूपारोपेण गोमयादिषु वृत्त्या बहुत्वावागमोऽथवा

---

[1] भा.पु.स.२ पृ.स.६७

छत्रशब्दस्य अच्छत्रिषु वावगमः तद्वत् प्रकृतेऽपि बहुत्वावगमो भविष्यति । एकस्यां तु तारायां फल्गुनीशब्दो न वर्तत इत्यत एकवचनाभावः । तत्र च लोकप्रयोग एव नियामक इति[1]।

## २७. छन्दसि पुनर्वस्वोरेकवचनम्

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** पुनर्वस्वोरेकवचनं वा छन्दसि । पुनर्वसू इति नक्षत्रे । पुनर्वस्वोः द्वित्वात् नित्यं द्विवचनं प्राप्तम् । तत्रैकचनमनेन विधीयते । तत्र च "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्याजालः" इत्यनेन पूर्वसवर्णे पुनर्वसु इति सिद्ध्यति । तस्मात् एकत्वविधानार्थमिदं सूत्रन्नापेक्षितम्[2] ।

## २८. विशाखयोश्च

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** द्वयोरेकवचनं वा । विशाखा नक्षत्रम् । विशाखा वेत्युदाहरणम् । अत्र विशाखयोः द्वित्वात् नित्यं द्विवचने प्राप्ते विकल्पेन एकवचनार्थमिदं सूत्रमारभ्यते

---

[1] भा.पु.स.२ पृ.स.६८

[2] भा.पु.स.२ पृ.स.६८

। तत्र च "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्याजालः" इत्यनेन पूर्वसवर्णे विशाखा इति सिद्ध्यति । तस्मात् एकत्वविधानार्थमिदं सूत्रन्नापेक्षितम्[1] ।

## २९. सरूपाणामेकशेष एकविभक्तौ

**सूत्रार्थः** :- विभक्तौ येषां सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।

**प्र.अ** :- सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- व्याकरणशास्त्रे जातिव्यक्तिपक्षाभ्यां सिद्धान्ता उपस्थापिता वर्तन्ते । व्यक्तिपक्षे प्रतिव्यक्ति भिद्यत इति कृत्वा तद्वाचकशब्दा अपि भिद्यन्ते । तस्मात् सरूपाणां शब्दानामेकत्वार्थमेकशेष अवश्यमारम्भणीय एव । यदा तावत् जातिः पदार्थ इति स्वीक्रियते तदा शब्देन जातिरभिधीयते । तस्याश्च जातेरेकत्वात् तद्वाचक एक एव शब्द इति कृत्वा एकशेषो नारम्भणीयः । कथं तर्हि द्विवचनबहुवचनोपपत्तिः, यतोहि जातेरेकत्वात् द्वित्वबहुत्वनिबन्धनानि नैव प्राप्नुवन्ति इति चेत् – वाचके जातिपक्षाश्रयणेन ऐक्येऽपि तदाश्रितव्यक्तीनां बहुत्वात् वाच्यनिष्ठसंख्यामादाय द्विबहुवचनोपपत्तेः । तस्मात् सूत्रमिदं नाराब्धव्यम्[2] ।

---

[1] भा.पु.स.२ पृ.स.६८

[2] भा.पु.स.२ पृ.स.७२

## ३०. वृद्धो यूना तल्लक्षणश्चेदेव विशेषः

सूत्रार्थः :- वृद्धः – गोत्रप्रत्ययान्तः शब्दः, यूना –युवप्रत्ययान्तेन शब्देन सह शिष्यते, तत्र यदि तल्लक्षणः – गोत्रप्रत्ययलक्षणो युवप्रत्ययलक्षश्चैव विशेषो भवति । गार्ग्यश्च गार्ग्यायणश्च तौ गार्ग्यौ । वात्स्यश्च वात्स्यायनश्च तौ वात्स्यौ ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- प्रत्याख्यानप्रकारः "पुमान् स्त्रिया" इति सूत्रे निरूपितः ।

## ३१. स्त्री पुंवच्च

**प.वि** :- स्त्री, पुंवत्, च इति त्रिपदं सूत्रम् ।

**सूत्रार्थः :-** वृद्धा – गोत्रप्रत्ययान्ता स्त्री युवप्रत्ययान्तेन शब्देन सह शिष्यते, सा च स्त्री पुंवद् भवति । तत्र यदि तल्लक्षणः – गोत्रप्रत्ययलक्षणो युवप्रत्ययलक्षणश्चैव विशेषो भवति । गार्गी च गार्ग्यायणश्च तौ गार्ग्यौ । वात्सी वात्स्यायनश्च तौ वात्स्यौ ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- प्रत्याख्यानप्रकारः "पुमान् स्त्रिया" इति सूत्रे निरूपितः ।

## ३२. पुमान् स्त्रिया

**प.वि :-** पुमान्, स्त्रिया द्विविधं सुत्रम् ।

**सूत्रार्थः :-** पुमान् – पुरुषवाची शब्दः स्त्रीवाचिना शब्देन सह शिष्यते, तत्र यदि तल्लक्षणः – लिङ्गलक्षण एव विशेषः भवति । ब्राह्मणी च ब्राह्मणश्च तौ ब्राह्मणौ । कुक्कुटीच कुक्कुटश्च तौ कुक्कुटौ ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क्र** :- पूर्वोक्तसूत्रैरेकशेषो विधीयते । सरूपाणामेकशेष एकविभक्तौ इति सूत्रेणैकशेषेऽप्राप्ते एतैः सूत्रेण एकशेषविधानं क्रियते । परन्तु अन्यथासिद्धत्वं मनसि निधाय सूत्रमिदं भाष्यकारैः प्रत्याख्यातम् । तथाहि – "असरूपाणां युवस्थविरस्त्रीपुंसानां विशेषस्याविवक्षितत्वात् सामान्यस्य च विवक्षितत्वात्सिद्धम् । असरूपाणां युवस्थिवरस्त्रीपुंसानां विशेषश्चाविवक्षितः सामान्यं च विवक्षितम् । विशेषस्याविवक्षितत्वात्सामान्य च विवक्षितत्वात् सरूपाणामेकशेष इत्येव सिद्धम्" इति । अर्थात् – गर्गापत्यत्वं सामान्यं वृद्धयूनोर्विवक्षितमिति सिद्धमेकशब्दत्वम् । यतो हि आरभ्यमाणेऽपि एकशेषे गार्ग्यौ इति श्रवाणमात्रेण नावष्यं वीशेषः अवधार्यते – किं वृद्धयुवानौ प्रक्रान्तौ उत वृद्धावेवेति । प्रकरणाद्यपेक्षे तु विशेषावसाये सामान्योपक्रमेऽपि तथैव प्रकरणादिना विशेषो अवसायिष्यते । तस्मात् नार्थो सूत्रेण[1] ।

---

[1] भा.पु.स.२ पृ.स.१०४

## ३३. भ्रातृपुत्रौ स्वसृदुहितृभ्याम्

**प.वि :-** भ्रातृपुत्रौ, स्वसृदुहितृभ्याम् इति द्विपदं सूत्रम् ।

**समासः :-** भ्राता च पुत्रश्च भ्रातृपुत्रौ । स्वसा च दुहिता च स्वसृदुहितारौ ताभ्यां स्वसृदुहितृभ्याम् ।

**सूत्रार्थः :-** स्वसृदुहितृभ्यां सहोक्तौ क्रमात् भ्रातृपुत्रौ शिष्येते ।

**प्र.अ :-** अत्र च सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** "सरूपाणामेकशेष एकविभक्तौ" इत्यत्र तावत् समानार्थकानां सरूपाणामेवं विरूपाणाञ्चैकशेषः सूत्रवार्तिकाभ्यां साधितः । अत्र च भ्राता च स्वसा च इत्यत्र सरूपत्वाभावात्, समानार्थकत्वाभावाच्च विरूपाणां विहितैकशेषस्याप्राप्तौ सूत्रमिदमारब्धम् । परन्तु लौकिकव्यवहारानुरोधेन सूत्रमिदं भाष्यकारैः प्रत्याख्यातम् । "पुमान् स्त्रिया" इत्यनेनैवैकशेषः सिध्यति । एवं वक्तुराशयोऽयम् –

वृत्त्यादिविषये भ्रात्रादीनां शब्दानां स्वस्रादिष्वपि वृत्तिरस्ति । तस्मादेकशेषः सिध्यतीति चेत् – न । भ्रातृशब्दस्य प्रवृत्तिनिमित्तं भिद्यते स्वसृशब्दप्रवृत्तिनिमित्तात् । तस्मात् नतरां भ्रातृशब्दस्य स्वसरि प्रवृत्तिरस्ति । तस्मान्नैकशेषः । तस्मादिदं सूत्रमारब्धव्यमिति चेत् – तुल्यकारणत्वादेव सिध्यति । बिभर्तीति भ्राता चेत् स्वसर्यपि भवितुमर्हतीति समानार्थकता । येन च विरूपाणामपि समानार्थानामिति एकशेषः सिध्यति । लोके तावत् स्वसरि न भ्रातृशब्दप्रयोगोऽस्ति । तद्यथा – स्वसा आनीयतमित्युक्ते न भ्राता आनीयते ।

तस्मात् एकशेषार्थं सूत्रमारब्धव्यमिति चेत् – न । सूत्रारम्भात् भ्रातृशब्दः स्वसर्यस्तीति वक्तव्यम् । अन्यथैकशेषासम्भवात् सूत्रं व्यर्थमेव स्यात् । अनारम्भे तु शब्दार्थयोः नित्यत्वात् सिद्ध्यति । न हि अविद्यमाना शब्दशक्तिः शास्त्रेण विधीयते । तस्माद्वृत्त्यादिषु भ्रातृशब्दः स्वसर्यस्तीति हेतोः सिद्ध एकशेषः । तस्मादिदं सूत्रं नारम्भणीयम्[1]।

## ३४. नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च एकवद्वा स्यात् । अत्र च शुक्लश्च कम्बलश्च, शुक्लं च कम्बलश्च तदिदं शुक्लम्, त इमे शुक्ले इति । शुक्लश्च कंबलः, शुक्ला च बृहतिका, शुक्लं च वस्त्रं तदिदं शुक्लम् । तानि इमानि शुक्लानि । इति च प्रकृतसूत्रेण क्लीबस्य शेषः, एवं विकल्पेन एकवद्भावश्च विधीयते । एतच्च सूत्रमन्तरेणापि सिद्ध्यति । तदुक्तं वार्तिकेन – 'प्रधाने कार्यसम्प्रत्ययाच्छेष' इति । प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्यय इति लौकिकन्यायेन प्रधानं नपुंसकमेव शिष्यते । नपुंसकस्य च कुतः प्राधान्यमिति चेत् – अनिर्ज्ञातेऽर्थे लोके नपुंसकमेव प्रयुज्यते । एवं गुणसन्देहे च, अव्यक्तरूपं दृष्ट्वा च । यथा किं जातमित्युच्यते । द्वयं चैव हि जायते । स्त्री वा पुमान् वा । दूराद्दृश्यमाने वस्तुनि यत्र गुणरूपस्य, स्त्रीत्वस्य, पुंस्त्वस्य वा सन्देहो वर्तते तत्र नपुंसकत्वमेव ।

---

[1] भा.पु.स.२ पृ.स.१०४

एतस्माच्च नपुंसकस्यैव प्राधान्यमवगम्यत इति कृत्वा नपुंसकमेव शिष्यते । एवञ्च सूत्रं विना नपुंसकस्य शेषे सिद्धेऽपि एकत्वविधानार्थं सूत्रमिदमपेक्षितमिति चेत् – आकृतिवाचित्वात् एकवचनं भविष्यति । यदा द्रव्यस्याभिधानं तदा द्विवचनं वा बहुवचनं वा भविष्यति । एवञ्च सूत्रसद्भावे विधीयमानयोरेकत्वक्लीबत्वयोः सूत्राभावेऽपि साधितत्वात् सूत्रमिदं नापेक्षितमिति भाष्याशयः[1] ।

## ३५. पिता मात्रा

**सूत्रार्थः** :- नपुंसकमनपुंसकेन एकवच्चास्यान्यतरस्यामित्यतः अन्यतरस्यामित्यनुवृत्तौ मात्रा सहोक्तौ पिता वा शिष्यत इति सूत्रार्थः सम्पद्यते ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** अत्र च पिता च माता च इत्यत्र सरूपत्वाभावात् समानार्थकत्वाभावाच्च विरूपाणां विहितैकशेषस्याप्राप्तौ सूत्रमिदमारब्धम् । परन्तु लौकिकव्यवहारानुरोधेन सूत्रमिदं भाष्यकारैः प्रत्याख्यातम् । पुमान् स्त्रिया इत्यनेनैव सिद्ध्यति । एवं वक्तुराशयोऽयम् – वृत्त्यादिविषये पितृशब्दस्य मातर्यपि वृत्तिरस्ति । तस्मादेकशेषः सिद्ध्यतीति चेत् – न । पितृशब्दस्य प्रवृत्तिनिमित्तं भिद्यते मातृशब्दप्रवृत्तिनिमित्तात् । तस्मात् नतरां पितृशब्दस्य मातरि प्रवृत्तिरस्ति । तस्मान्नैकशेषः । तस्मादिदं सूत्रमारब्धव्यमिति चेत् – न । तुल्यकारणत्वादेवैकशेषः सिद्ध्यति । पाति, पालयतीति पिता चेत् मातर्यपि पाति

---

[1] भा.पु.स.२ पृ.स.१०५

पालयतीति व्यवहारो भवितुमर्हति । येन च विरूपाणामपि समानार्थानामिति एकशेषः सिद्ध्यति । लोके तावत् मातरि पितृशब्दप्रयोगो नास्ति । तदेवं – मातरि वर्तितव्यमित्युक्ते न हि पितरि प्रवृत्तिर्दृश्यते । तस्मात् एकशेषार्थं सूत्रमारब्धव्यमिति चेत् – न । सूत्रमारब्धमिति कृत्वा पितृशब्दो मातर्यस्तीति वक्तव्यम् । अन्यथैकशेषासम्भवात् सूत्रं व्यर्थमेव स्यात् । अनारम्भे तु शब्दार्थयोः नित्यत्वात् सिद्ध्यति । नहि अविद्यमाना शब्दशक्तिः शास्त्रेण विधीयते । तस्माद्वृत्त्यादिषु पितृशब्दो मातर्यस्तीति हेतोः सिद्धः एकशेषः[1] ।

### ३६. श्वशुरः श्वश्र्वा

**सूत्रार्थः** :- नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामित्यतः अन्यतरस्यामित्यनुवृत्तौ श्वशुरेण सहोक्तौ श्वश्रूर्वा शिष्यत इति सूत्रार्थः सम्पद्यते ।

**प्र.अ :-** अत्र च सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** अत्र च श्वशुरश्च श्वश्रूश्च इत्यत्र सरूपत्वाभावात् समानार्थकत्वाभावाच्च विरूपाणां विहितैकशेषस्याप्राप्तौ सूत्रमिदमारब्धम् । परन्तु लौकिकव्यवहारानुरोधेन सूत्रमिदं भाष्यकारैः प्रत्याख्यातम् । पुमान् स्त्रिया इत्यनेनैवैकशेषः सिद्ध्यति । एवं वक्तुराशयोऽयम् –

वृत्त्यादिविषये श्वशुरशब्दस्य श्वश्र्वामपि वृत्तिरस्ति । तस्मादेकशेषः सिद्ध्यतीति चेत् – न । श्वशुरशब्दस्य प्रवृत्तिनिमित्तं भिद्यते

---

[1] भा.पु.स.२ पृ.स.१०७

श्वश्रूशब्दप्रवृत्तिनिमित्तात् । तस्मात् नतरां श्वशुरशब्दस्य श्वश्र्वां प्रवृत्तिरस्ति । तस्मान्नैकशेषः । तस्मादिदं सूत्रमारब्धव्यमिति चेत् – न । तुल्यकारणत्वादेवैकशेषः सिद्ध्यति । आश्वाप्तव्यः इति श्वशुरः चेत् श्वश्र्वामपि स व्यवहारो भवितुमर्हति । येन च विरूपाणामपि समानार्थानामित्येकशेषः सिद्ध्यति । लोके तावत् श्वश्र्वां श्वशुरशब्दप्रयोगो नास्ति । तस्मादेकशेषार्थं सूत्रमारब्धव्यमिति चेत् – न । सूत्रमारब्धव्यमिति कृत्वा श्वशुरशब्दः श्वश्र्वामस्तीति वक्तव्यम् । अन्यथैकशेषासम्भवात् सूत्रं व्यर्थमेव स्यात् । अनारम्भे तु शब्दार्थयोः नित्यत्वात् सिद्ध्यति । नहि अविद्यमाना शब्दशक्तिः शास्त्रेण विधीयते । तस्माद्वृत्त्यादिषु श्वशुरशब्दः श्वश्र्वामस्तीति हेतोः सिद्ध एकशेषः । तस्मादिदं सूत्रं नारम्भणीयम्[1]।

## ३७. त्यदादीनि सर्वैर्नित्यम्

**सूत्रार्थः :-** सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** स च देवदत्तश्च तौ इति साधनार्थमिदं सूत्रमारभते । अत्र तच्छब्देन सहान्यो देवदत्तशब्द उच्यमान इति कृत्वा तच्छब्द एव नित्यं शिष्यते । तस्मात् तौ इति सिद्धम् । एतदर्थन्तु सूत्रमिदं नारम्भणीयम् । कुत इति चेत् – त्यदादीनां सामान्यार्थत्वात् । त्यदादीनां सामान्यमर्थ इति कृत्वा देवदत्ते वक्तव्ये देवदत्त इति

[1] भा.पु.स.२ पृ.स.१०७

यथा प्रयोगस्तथा स इत्यपि प्रयोगः सिध्यति । तस्मादेकेनैव तच्छब्देन उभयोरप्यभिधानं भवतीति कृत्वा एकशेषः सिद्ध एव । देवदत्तशब्दः कुतो न शिष्यत इति चेत् तस्योभयोरभिधानसामर्थ्याभावात् । लिङ्गनिर्णयस्तावत् लोकतो भवतीति न कोऽपि दोषः [1]।

## ३८. ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री

**सूत्रार्थः :-** एषु सहविवक्षायां स्त्री शिष्यते ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** पुमान्स्त्रिया इत्यनेन पुम्शेषे प्राप्ते तरुणातरुणानां ग्राम्याग्राम्याणां च प्राप्त एकशेषे सूत्रमिदमारब्धम् । अग्राम्यतरुणयोर्निषेधार्थश्च । नार्थोऽनेन योगेन । कथं तर्हि पुंसश्शेषो वार्यते स्त्रियश्च शेष इष्यत इति चेत् उत्कालितपुंस्का गाव एव उपयोक्ष्यन्ते वाहाय विक्रयाय च । तस्माद्गोष्ठ उपलभ्यमाना इमा एव गावः । तासामेव सङ्घस्य सद्भावात् एकशेषो नारम्भणीयः । आरण्येषु तर्हि स्त्रीशेषो न स्यात्तदर्थं सूत्रमपेक्षितमिति चेन्न । आरण्यानां ग्रहणाऽयोग्यत्वात् उत्कालनासम्भव एव । तस्मात्तदर्थोऽपि योगोऽयं नारम्भाणीयः । प्राण्यादिसामान्ये शक्त्यभावात् वाहादिक्रियाऽयोग्यत्वात् तेषु निषेधार्थमपि नारम्भणीयः । तस्मात् स्त्री न शिष्यत इति कारणादेव ब्राह्मणा इत्येव भवति । सङ्घ एव इत्यपि न वक्तव्यम् । निर्ज्ञाते अन्यथा अप्रयोगात् गावौ एतावित्यत्र

---

[1] भा.पु.स.२ पृ.स.१०८

दोषस्स्यात् । शक्त्यभावात् वाहाय विक्रयाय च अतरुणा अनर्हा इति कृत्वा अतरुणेषु निषेधोऽपि न वक्तव्यः । अतस्सूत्रमिदं प्रयोजनाऽभाववदिति कृत्वा प्रत्याख्यातमाकरे [1] ।

**तृतीयः पादः**

## ३९. दाणश्च सा चेच्चतुर्थ्यर्थे

**सूत्रार्थः :-** तृतीयाविभक्तियुक्तात् सम् उपसर्गात् दाण्धातोरपि कर्तरि आत्मनेपदं भवति, यदि सा तृतीया चतुर्थी-अर्थे ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** अशिष्टानां संकीर्णाचाराणं यः व्यवहारः तस्मिन्नर्थे चतुर्थ्यर्थे तृतीया विधीयते । तद्योगे सति अनेन आत्मनेपदं विधातव्यं वर्तते । यथा दास्या संय्यच्छते, वृषल्या संय्यच्छते कामुकः इति । यस्तु शिष्टः व्यावहारः तत्र ब्राह्मणीभ्यः संय्यच्छतीत्येव भवितव्यम् । परन्त्वयं योगो न कार्यः । कथमिदानीम् आत्मनेपदं तत्प्रयोजिका तृतीया च ? इति चेत् "सह युक्ते तृतीया स्यात् व्यतिहारे तङो विधिः"[2] इत्युक्तम् । दास्याभिलषितं धूर्तः करोति, दासी च

---

[1] भा.पु.स.२ पृ.स.१०९

[2] भा.पु.स.२ पृ.स.१६६

धूर्ताभिलषितमिति कर्मव्यतिहारमाश्रित्यैव्वात्मनेपदं सिद्धम् । सह युक्ते अप्रधाने इत्येव तृतीया च । दानपूर्वकोपभोगे सम्प्रयच्छतेः सत्वात् । दास्यै विश्राण्य तया सह उपभुङ्क्ते इत्यर्थः । तस्मात् सूत्राभ्यामिष्टसिद्धौ पृथगयं योगः न कार्यः [1] ।

## ४०. स्वरितञितः कर्त्रभिप्राये क्रियाफले

**सूत्रार्थः :-** अत्र अनुदात्तङित इत्यत आत्मनेपदम् इति वर्तमाने स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफल इत्ययमर्थो लभ्यते ।

**प्र.अ :-** स्वरितञित्ग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** स्वरितञित्ग्रहणं याति, वाति, द्राति, प्साति इत्यादिषु अस्वरितञित्सु आत्मनेपदनिवारणार्थम् । येन च "शेषात्कर्तरि परस्मैपदम्" इति परस्मैपदं प्राप्नोति इति प्रयोजनम् । तच्च स्वरितञित इति पदं विनापि साधयितुं शक्यम् । तथा हि – सूत्रं कर्त्रभिप्राये क्रियाफल इति वर्तते । तन्न वक्तव्यम् । कुत इति चेत् सर्वेषां धातूनामपि कर्त्रभिप्रायक्रियाफलमस्ति । स्वभावत एव सिद्धे पुनर्न वक्तव्यम् । तथापि उच्यते इत्यस्य अयमर्थो येषां धातूनां कर्त्रभिप्रायमकर्त्रभिप्रायं च क्रियाफलमस्ति तेषामेव आत्मनेपदं भवति । येषां तावत् केवलं कर्त्रभिप्रायं क्रियाफलं वर्तते, अकर्त्रभिप्रायं च क्रियाफलं नास्ति तेषां तावत् परस्मैपदमेव इति लभ्यते । अत्र यातिवात्यादीनां च केवलं कर्त्रभिप्रायं क्रियाफलम् । तस्मात् उभयविधक्रियाफलत्वाभावात्, आत्मनेपदस्य प्रसक्तिरेव नास्ति । आचार्यश्च येषां

---

[1] भा.पु.स.२ पृ.स.१६६

धातूनाम् उभयविधं क्रियाफलमस्ति तानेव धातून् स्वरितञिद्रूपेण पठतीति न अतिव्याप्तिः ।

**प्र.सू.स्व :-** कर्तृभिप्राये क्रियाफले [1]।

## ४१. लुटि च क्लृपः

**सूत्रार्थः :-** "वृद्भ्यः स्यसनोः" इत्यतः स्यसनोरिति शेषात्कर्तरि इत्यतः परस्मैपदमिति, वा क्यष इत्यतो वेति च अनुवर्तते इति कृत्वा, लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा इति सूत्रार्थो लभ्यते ।

**प्र.अ :-** चकारः प्रत्याख्यातः ।

**प्र.क्र :-** स च चकारः "वृद्भ्यः स्यसनोः" इति सूत्रात् स्यसनोः इति अनुवृत्तिसम्पादकः । तञ्चकारं विनाप्यस्माभिः स्यसनोः अनुवृत्तिः सम्पादयितुं शक्यते इति भाष्यकारैः प्रदर्शितम् । यदि चकारं विना अनुवृत्तिरेव न भवति तर्हि "द्युद्भ्यो लुङि" इत्यत्रापि चकारोऽपरः कर्तव्यः स्यात् । वा क्यष इत्यतो वा इत्यनुवर्तनार्थः । तथापि न कृतमित्यत गम्यते यदन्तरेणापि चकारमनुवृत्तिर्भवतीति । तस्मात् यत्र यत्र अनुवृत्त्यर्थश्चकारः क्रियते, तत्र सर्वत्र प्रत्याख्यानं चकारस्य क्रियते । तस्मात् प्रकृतेऽपि नार्थः चकारेण ।

---

[1] भा.पु.स.२ पृ.स.१८४

**प्र.सू.स्व :-** लुटि च क्लृपः[1] ।

**चतुर्थः पादः**

## [2]४२. भीत्रार्थानां भयहेतुः

**सूत्रार्थः :-** भयार्थानां त्राणार्थानां च योगे भयहेतुरपादानं स्यात्।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** वृकेभ्यो बिभेति, दस्युभ्यो बिभेति इत्यादिषु हेतौ तृतीया प्राप्ता । यदि स

---

[1] भा.पु.स.२ पृ.स.१८९

[2] भा.पु.स.१ पृ.स.३५१ (सूत्रेस्मिन् प्रत्याख्यानस्यानुक्तत्वात् इह निवेशः ।)

बहुषु बहुवचनम् ॥ २१ ॥

सम्पूर्णं सूत्रं प्रत्याख्यातम् । "तद्धितश्चासर्वविभक्तिः"(१/१/३८) इति सूत्रे भाष्ये इयं विचारणा कृता । तत्र च असर्वविभक्त्यव्ययम् इत्युच्यमानेऽपि न दोष इत्युक्त्वा तत्रान्योन्याश्रय एवं परिहृतः । 'अथासर्वविभक्तिरित्युच्यते । एवमपि न दोषः । कथम् ? इदञ्चाप्यद्यत्वे अति बहुक्रियते – एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति । कथं तर्हि ? एकवचनमुत्सर्गतः करिष्यते । तस्य द्विबह्वर्थयोः द्विवचनबहुवचने बाधके भवतः'[2] इति । तद्व्याख्याने प्रदीपे- 'एकस्मिन्नित्यपनीय एकवचनमिति सूत्रं कर्तव्यम् । ततो द्विबह्वोर्द्विवचनबहुवचन इति ।अलिङ्गाङ्ख्येभ्योऽव्ययेभ्यश्च उत्सर्गत एकवचनं सिद्धं भवति[2]' इति । तस्मात् एकवचनम् । द्विबह्वोः द्विवचनबहुवचने "द्व्येकयोर्द्विवचनैकवचने"(१/४/२२) इति ।

**प्र.सू.स्व :-** इति एकवचनम् । द्विबह्वोः द्विवचनबहुवचने

भयहेतुः तर्हि पञ्चम्येवेष्टेति कृत्वा पञ्चमी अनेन विधीयते । यदीदं सूत्रं न स्यात् तर्हि भयहेतुविषये प्राप्तां तृतीयां बाधित्वा कथमिह वृकेभ्यो दस्युभ्यो बिभेतीति पञ्चमी सिध्यतीति प्रश्ने – उच्यते ।

योऽयं प्रेक्षापूर्वकारी मनुष्यो भवति। स पश्यति । यदि मां दस्यवः पश्यन्ति वृका वा ध्रुवो मे मृत्युरिति । स बुद्ध्या सम्प्राप्य ततो निवर्तते। अत्र "ध्रुवमपायेऽपादानम्" इत्येव सिद्धम् । बुद्ध्या संस्पृश्य निवर्तत इत्यतो बुद्धिकृतविभागस्य आश्रयत्वेन ध्रुवत्वम्। तस्मात्सूत्रं नारब्धव्यम्[1] ।

## ४३. पराजेरसोढः

**सूत्रार्थः :-** पराजेः प्रयोगे असह्यः अर्थः अपादानं स्यात् ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** अध्ययनात् पराजयते इत्यत्र अध्ययनहेतुकग्लानिः वाक्यार्थः । योऽयं प्रेक्षापूर्वकारी मनुष्यो भवति । स पश्यति । दुःखमध्ययनं, दुर्धरञ्च, गुरवश्च दुरुपचारा इति स बुद्ध्या सम्प्राप्य ततो निवर्तते । तस्मात्सूत्रं नारब्धव्यम् [2]।

---

[1] भा.पु.स.२ पृ.स.२५०

[2] भा.पु.स.२ पृ.स.२५०

## ४४. वारणार्थानामीप्सितः

**सूत्रार्थः** :- प्रवृत्तिविघातो वारणम् । वारणार्थानां प्रयोगे ईप्सितोऽर्थः अपादानं स्यात् ।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- यवेभ्यो गां वारयतीत्यत्र यवेषु प्रवर्तितुकामां गां प्रवृत्तिविमुखीकरोतीत्यर्थः । । कथमस्याभावे यवेभ्यो गामिति वारणार्थकप्रयोगे पञ्चमीति चेत् – पश्यत्ययं यदीमा गावः तत्र गच्छन्ति ध्रुवः सस्यविनाशः । सस्यविनाशे अधर्मश्चैव राजभयञ्च । स बुद्ध्या सम्प्राप्य ततो निवर्तते । बुद्ध्या संस्पृश्य निवर्तत इत्यतो बुद्धिकृतविभागस्याश्रयत्वात् ध्रुवत्वम् । तस्मात्सूत्रं नारब्धव्यम्[1] ।

## ४५. अन्तर्धौ येनादर्शनमिच्छति

**सूत्रार्थः** :- व्यवधाने सति यत्कर्तृकात्मनो दर्शनाभावमिच्छति तदपादानम्।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- उपाध्यायादन्तर्धत्ते इत्यत्र कृष्णकर्तृकतिरोभवनमर्थः । तस्मात् कर्तरि तृतीया प्राप्ता । तां बाधितुमिदमारब्धम् । सूत्राभावेऽपि उपाध्यायात् पञ्चमी साधयितुं शक्यते । तथाहि – योऽयं प्रेक्षापूर्वकारी मनुष्यो भवति । स पश्यति । यदि मामुपाध्यायः पश्यति तर्हि ध्रुवम्मे पेषणमिति अथवा उपालम्भो वेति अत्र

---

[1] भा.पु.स.२ पृ.स.२५१

"ध्रुवमपायेऽपादानम्" इत्येव सिद्धम् । बुद्ध्या संस्पृश्य निवर्तत इत्यतो बुद्धिकृतविभागस्य आश्रयत्वेन ध्रुवत्वम्[1] ।

## ४६. आख्यातोपयोगे

**सूत्रार्थः** :- नियमपूर्वकविद्यास्वीकारे वक्तुरपादानसंज्ञा स्यात् ।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- उपाध्यायादधीत इत्यत्र नियमविशेषकमुपाध्यायस्य उच्चारणमनूच्चरतीत्यर्थः । अत्र प्राप्तां षष्ठीं बाधित्वा पञ्चम्यर्थमिदमारब्धम् । सूत्रं विनापि अत्रापादानत्वं सम्पाद्यते । तथाहि – उपाध्यायात् अध्ययनमपक्रामति । उपाध्यायादपक्रान्तं शब्दजालमुपादत्ते । तस्मादपक्रमेण जातो यो विश्लेषः तदाश्रयत्वमुपाध्यायस्येति कृत्वा अपादानत्वं सिद्धम् । अत्रापि "ध्रुवमपायेऽपादानम्" इत्येव सिद्धम्[2]।

---

[1] भा.पु.स.२ पृ.स.१५२

[2] भा.पु.स.२ पृ.स.२५३

## ४७. भुवः प्रभवः

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** हिमवति प्रकाशते इत्यादौ अधिकरणसप्तमीवत् सप्तम्यां प्राप्तायामयमारम्भः । हिमवतो गङ्गा प्रभवतीत्यत्र हिमवतोऽपादानत्वमन्यथैव सिद्धम् । तथाहि – हिमवतोऽपक्रामन्ति आपः । अपक्रमेण यो विश्लेषो जातः तदाश्रयो गोमयो भवति । तस्मात्तस्यापादानत्वम् । एवं च "भीत्रार्थानां भयहेतुः" इति सूत्रात् आरभ्य एतदन्तं "ध्रुवमपायेपादनाम्" इत्येव सिद्धम् [1]।

## ४८. ते प्राग्धातोः

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** प्राग्धातुवचनं प्रयोगनियमार्थम् । धातोः पूर्वं परञ्च प्रादीनां प्रयोगे प्राप्ते धातोः प्रागेव प्रयोक्तव्या इति प्रयोगनियमार्थम् । अथवा संज्ञानियमार्थम् । धातोः परे प्रयुज्यमानानां न संज्ञा अपितु प्रागेव प्रयुज्यमानानां संज्ञा इति । एवञ्च प्रयोगनियमार्थं, संज्ञानियमार्थं सूत्रमदो विवक्षितमिति चेदाह – "उभयोरनर्थकं वचनं अनिष्टादर्शनात्" । संज्ञाप्रयोगनियमार्थं सूत्रन्तावन्नारम्भणीयम् । न कश्चित्प्रपचतीति वक्तव्ये पचति प्रेति प्रयुङ्क्ते । पूर्वं प्रयोग एव नास्ति यङ्ककर्मणोऽन्यत्र । तस्मात्प्रयोगनियमार्थं न कर्तव्यम् । पूर्वस्यैव इति नियमार्थं

---

[1] भा.पु.स.२ पृ.स.२५५

सूत्रमित्युक्तम् । परन्तु पूर्वस्यैव प्रयोगो दृश्यते न परस्य । तस्मात्परव्यावृत्त्यर्थमपि न सूत्रम्[1]।

## ४९. अधिरीश्वरे

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र** :- अनेन सूत्रेण कर्मप्रवचनीयसंज्ञा विधीयते येन यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी इति सूत्रेण सप्तमी स्यात् । अधि ब्रह्मदत्ते पाञ्चालाः, अधि पाञ्चालेषु ब्रह्मदत्तः । अत्र अधिकरणसप्तम्या एव सिद्धम् । तथाहि –

"यस्य चेश्वरचनमिति कर्तृनिर्देशः चेत् अन्तरेणवचनं सिद्धम् । अधि ब्रह्मदत्ते पाञ्चालाः । आधृताः ते तस्मिन् भवन्ति । सत्यमेवमेतत् । नित्यं परिग्रहीतव्यं परिग्रहीत्रधीनं भवति" इत्युक्तं भाष्ये[2] । अर्थात् प्रकृतोदाहरणे कर्मप्रवचनीयत्वमवलम्ब्य यस्मादधिक इत्यादिसूत्रेण न साध्यास्ति सप्तमी । यतोहि प्रकृते आधारत्वात् अधिकरणसंज्ञयैव सप्तमी सिद्धा भविष्यति । यतो हि ब्रह्मदत्ते पाञ्चालदेशः अधिष्ठितो वर्तते । तस्मात् आधारत्वादेव विभक्तिः ।

---

[1] भा.पु.स.२ पृ.स.२९०

एवं च उभयोरानर्थक्यं वचनमनिष्टादर्शनात् इति वदता भाष्यकारेण ते प्राग्धातोः, छन्दसि परेपि इति सूत्रद्वयमपि प्रत्याख्यातम् वर्तते । समानरूपत्वात् प्रत्याख्यानस्य, सूत्रस्य पृथक्तया अनुपादानात् च पुनरत्र नोपन्यस्तम् ।

[2] यद्यपीदं सर्वं वाक्यं सूत्रेऽस्मिन् न वर्तते, अथापि सूत्रस्यास्य कुत उल्लेखः इति चेत् – भाष्यकारैः सूत्रेस्मिन् एव एवक्रियते इति उल्लिखितं वर्तते । तस्मात् प्रतिज्ञाविरोधः नास्तीति भाव्यते ।

"स्वचनात्तु सिद्धम् । यस्य यस्येश्वरः तत्राप्यन्तरेण वचनं सिद्धम् । अधि पाञ्चालेषु ब्रह्मदत्तः । आधृतः स तेषु भवति । सत्यमेवमेतत् । नित्यं परिगृहीता परिगृहीतव्याधीनो भवति" इति । एवं च प्रकृतोदाहरणेऽपि आधारोधिकरणमिति संज्ञयैव सप्तमी सिद्धा भवति । यतः देवदत्तः पाञ्चालदेशे आधृतो वर्तते । सः पाञ्चालदेशमधिष्ठायैव तिष्ठति । एवञ्च एकः अपरस्याधीनो भवतीत्यतः पर्यायेण उभयोरपि सप्तमी । तस्मात् सूत्रं न कार्यम् [1]।

## ५०. परः सन्निकर्षः संहिता

**सूत्रार्थः :-** वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** तावदिदं सूत्रं प्रत्याख्यातमाकरे । तत्प्रतिपादितं वार्तिकेन - "संहितावसानयोः लोकविहितत्वात् सिद्धम्"[2] इति । यथा लोके कश्चित् कञ्चित् अधीयानं वदति- 'शन्नोदेवीयं संहितया अधीश्व' इति । तत्र यथा सन्निकर्षः स्यात् तथा सः परमसन्निकर्षमधीते । एवञ्च लोकत एव सिद्धायां संज्ञायां सूत्रमिदं नापेक्षितम् [3]।

---

[1] भा.पु.स.२ पृ.स.२९७

[2] भा.पु.स.२ पृ.स.३१२

[3] भा.पु.स.२ पृ.स.३१२

## ५१. विरामोऽवसानम्

**सूत्रार्थः :-** वर्णानामभावः विरामसंज्ञः स्यात् ।

**प्र.अ. :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** सूत्रमिदन्त्यक्तुं शक्यमित्युक्तं भाष्ये । तथाहि - "संहितावसानयोः लोकविहितत्वात् सिद्धम्" इति वार्तिकम् । तस्यायमर्थः संहितावसानमित्युभेऽपि संज्ञे लोकतः सिद्धे । तस्मात् पुनः विशिष्टं साध्यन्नास्तीत्यतः सूत्रेण तयोर्विधानं न कार्यम् इति । लोके कश्चित् कञ्चित् अधीयानं पृच्छति - शन्नोदेवीयं केनावस्यसि त्वम् इति । स प्रत्याह - अकारेण इकारेण उकारेण इति । एवञ्च संज्ञेयं लोकत एव सिद्धा [1]।

---

[1] भा.पु.स.२ पृ.स.३१२

# द्वितीयाध्याये प्रत्याख्यातानि सूत्राणि

प्रथमः पादः

## ५२. समर्थः पदविधिः

**सूत्रार्थः** :- पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः ।

**प्र.अ** :- समर्थग्रहणं प्रत्याख्यायते ।

**प्र.क** :- समर्थग्रहणं किमर्थमिति चेदाह – सामर्थ्याभावे समासो नेष्टः । पश्य देवदत्त काष्ठं, श्रितो यज्ञदत्तो गुरुकुलमित्यत्र समासो माभूदित्येतदर्थम् । समर्थग्रहणेन निरुक्तो दोषो निर्हण्यते चेदपि महत्कष्टं श्रित इत्यत्र सामर्थ्यसत्वात् समासः कुतो न भवतीति चेत् –

सामर्थ्याभावादेव । सापेक्षन्न समर्थम् । प्रकृते च कष्टशब्दो विद्यमानापेक्षः । तस्मात् स न समर्थः । ततो न समासः । यदि सापेक्षमसमर्थमिति निरुक्तदोषपरिहारार्थं स्वीक्रियते तर्हि राजपुरुषो दर्शनीय इत्यत्र सापेक्षत्वात् समासो न स्यात् । प्रकृते च पुरुषशब्दस्य दर्शनीयत्वसापेक्षत्वात् इति चेत् – न । अत्र च सापेक्षं प्रधानम् । यत्र च सापेक्षमप्रधानं तत्रैव असामर्थ्यात् समासनिषेधः । प्रकृते तु न तथा इत्यतो न दोषः । यत्र तर्ह्यप्रधानं सापेक्षं तत्र समासनिषेधे देवदत्तस्य गुरुकुलमित्यत्रापि समासो न स्यादिति चेत् – न । सम्बन्धिशब्दत्वात् । यत्र तु वाक्यं प्रयुज्यते भार्या राज्ञः पुरुषो देवदत्तस्येति तत्र तु विवक्षितार्थो भिन्नो भवति । यत्र तु भार्या राजपुरुषो देवदत्तस्येति समासो विवक्षितो भवति तत्र भिन्नैवार्थो भवति ।

एवञ्च यत्र व्यस्तसमस्तयोर्भिन्नार्थकत्वं तत्र सुतरां व्यस्ते सामर्थ्याभावात् समासो न भवति । तदेव इष्टञ्च । यत्र च व्यस्तसमस्तयोः समानार्थकत्वं तत्र व्यस्ते सामर्थ्यं भवत्येवेति कृत्वा समासः क्रियत एव । एवञ्च समर्थपदं विनापि सामर्थ्यवतामेव पदविधिरिति कृत्वा सूत्रे समर्थग्रहणं त्याज्यम् ।

**प्र.सू.स्व :-** पदविधिः ।[1]

## ५३. आङ् मर्यादाभिविध्योः

**सूत्रार्थः :-** मर्यादायामभिविधौ च आङ् पञ्चम्यन्तेन समस्यते ।

**प्र.अ :-** मर्यादाभिविध्योः इति प्रत्याख्यातम् ।

**प्र.क :-** "अपपरिबहिरञ्चवः पञ्चम्या" इत्यतः पञ्चमीत्यनुवर्तते । तत एतयोराङ् पञ्चम्यन्तेन समस्यते सोऽव्ययीभाव इति सूत्रार्थः । आ मुक्ति संसारः – आमुक्तेः । मर्यादाया उदाहरणमिदम् । मुक्तेः प्राक् संसार इत्यर्थः । आ बालं हरिभक्तिः आबालेभ्यः । अभिविधौ उदाहरणम् । बालानप्यन्तर्भाव्येत्यर्थः । अत्र मर्यादाभिविध्योरिति ग्रहणं प्रत्याख्यातम् । आङ्ग्रहणञ्च पूर्वस्मिन्नेव सूत्रे कर्तव्यमित्युक्तम् । तथाहि – "आङ्मर्यादावचने"इत्यतो मर्यादायामभिविधौ च आङः कर्मप्रवचनीयसंज्ञा दीयते । प्रकृते च आङ् इति केवलं सूत्रमस्तीति चेत् "अपपरिबहिरञ्चवः पञ्चम्या" इत्यतः पञ्चमीत्यनुवर्तमाने समस्यत इत्यर्थो लभ्यते

[1] भा.पु.स.२ पृ.स.३२१

। आङः पञ्चम्यन्तेन योगः कदा भवतीति जिज्ञासायां कर्मप्रवचनीयसंज्ञायामेव इत्युत्तरमुपलभ्यते । सा च कर्मप्रवचनीयसंज्ञा आङो मर्यादाभिविध्योरेव विधीयते । तस्मात् केवलेन आङ् इति सूत्रेण मर्यादाभिविध्योरेव गम्यमानयोराङो या कर्मप्रवचनीयसंज्ञा तस्यां संज्ञायाञ्च यत्पञ्चम्यन्तं तेन पञ्चम्यन्तेन आङ् समस्यते इत्ययमर्थः सम्पद्यते । तस्मात् मर्यादाभिविध्योरिति पदं त्यक्त्वा आङिति केवलं वक्तुमुचितम् ।

**प्र.सू.स्व :-** आङ् [1]।

## ५४. पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः

**सूत्रार्थः :-** तृतीयान्तमेतैस्सह समस्यते । स तत्पुरुषः ।

**प्र.अ :-** सदृशग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** अत्र च मात्रा सदृशो मातृसदृश इत्युदाहरणम् । अथ च "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वीतीयाकृत्याः" इति पूर्वपदप्रकृतिस्वरश्च सिद्ध्यति । तस्मात् सदृशग्रहणं सप्रयोजकमति चेत् आह सदृशग्रहणमप्रयोजकमिति । तथाहि तृतीयासमासवचनात् । अयमाशयः मातृसदृश इति समासस्तुल्यार्थक एवं तत्पुरुषश्च । तस्मात् "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्यामिति" तृतीयासमासः प्राप्तः । अतोऽत्र

---

[1] भा.पु.स.२ पृ.स.३६३

"अपपरिबहिरञ्चवः पञ्चम्या"(२/१/१२) इति सूत्र एव आङ्ग्रहणं कर्तुं शक्यमिति नागेशाशयः ।

पुनस्सदृशशब्दस्य तृतीयासमासो न वक्तव्यः । सदृशशब्दस्य षष्ठीसमासः प्रयोजनमिति स्वीकुर्मः । येन च सदृशशब्दस्सार्थकस्स्यादिति चेत् न । षष्ठ्यर्थं वचनं चेत् "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्यामिति" षष्ठ्या साकं पक्षे तृतीयवचनमनर्थकं स्यात् । ततः सदृशग्रहणं व्यर्थमेव ।

**प्र.सू.स्व :-** पूर्वसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः[1] ।

## ५५. उपमितं व्याघ्रादिभिः सामान्याप्रयोगे

**सूत्रार्थः :-** उपमितं समानाधिकरणैः व्याघ्रादिभिः सुब्भिः सह विभाषासमासः सामान्याप्रयोगे कर्मधारयः तत्पुरुषः ।

**प्र.अ :-** सामान्याप्रयोगे इति प्रत्याख्यतम् ।

**प्र.क :-** सामान्याप्रयोगे इत्यस्य प्रयोजनं – पुरुषो व्याघ्र इव शूरः, पुरुषो व्याघ्र इव बलवान् इत्यत्र सामान्यधर्मस्य प्रयोगे सति समासो माभूदिति । स च समास निषेधः अन्यथाऽपि सिद्धः । असामर्थ्यात् । सामर्थ्यवतामयं पदविधिः समासो नाम । तत्र असमर्थैः समस्तैः न भवितव्यम् । कथमसामर्थ्यमिति चेत् सापेक्षत्वात् । सापेक्षमसमर्थं भवति । नन्विदं प्रधानस्य सापेक्षस्यापि समासः इति ज्ञापनार्थं भवत्विति चेत् – न । प्राधान्यादेवानेकोपकारकोपकार्यत्वाविरोधात् समासस्य न्याय्यत्वादेव सिद्धिः ।

---

[1] भा.पु.स.२ पृ.स.३७५

**प्र.सू.स्व :-** उपमितं व्याघ्रादिभिः[1] ।

## ५६. वर्णो वर्णेन

**सूत्रार्थः :-** वर्णविशेषवाचि सुबन्तं समानाधिकरणेन वर्णविशेषवाचिना समर्थेन सुबन्तेन सह विकल्पेन समस्यते, स च कर्मधारयतत्पुरुषो भवति ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** समानाधिकरणसमासविधायकं सूत्रमिदम् । कृष्णसारङ्गः सारङ्गचित्रः इति । अत्र च सारङ्गः चित्रोऽपि भवति, अचित्रोऽपि । अतः चित्र इत्यत्र विशेषणम् । नानारूपसमाहारः चित्रमित्यभिधीयते । तस्मात् विशेषणं विशेष्येण बहुलमिति सूत्रेणैव सिद्धौ सूत्रमिदं न कर्तव्यम् । ननु वर्णो वर्णेष्विति सूत्रविहितस्वरार्थं सूत्रारम्भः,लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं यथा स्यादिति वाच्यम् । स्वरस्य प्रयोजनत्वे श्रज्यावमकन्पापवत्सु भावे कर्मधारये इत्यनन्तरमेव सूत्रस्य स्वरविधायकस्य पठनेन सर्वेष्टसिद्धेः । तस्मात्सूत्रमिदं विशेषणं विशेष्येण बहुलमित्यनेनेदमन्यथासिद्धम्[2] ।

---

[1] भा.पु.स.२ पृ.स.३९८

[2] भा.पु.स.२ पृ.स,४०७

तृतीयः पादः

## ५७. अनभिहिते

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** अनभिहिताधिकारस्य प्रयोजनकथनावसरे भाष्यकारैरिदमभिहितम् । "यद्येकत्वादयो विभक्त्यर्थाः । अथहि कर्मादयो विभक्त्यर्थाः नार्थो अनभिहिताधिकारेण" । तथा च जातिव्यक्तिलिङ्गसंख्याकारकेषु त्रिकं प्रातिपदिकार्थः इति पक्षे, संख्यान्तचतुष्कं प्रातिपदिकार्थः कारकं विभक्त्यर्थः इति पक्षे च सूत्रमिदं न कार्यम् । यदि तु संख्या विभक्त्यर्थः इति पक्षः तदैव सूत्रस्यास्यापेक्षा । तथा च कर्मगतं यदेकत्वं तत्र द्वितीया इत्याद्यर्थः । तथा च बहुपटुः इत्यादौ बहुचा उक्तत्वात् यथा कल्पपादयो न भवन्ति, एवं क्रियते कटः इत्यादावपि तिङादिभिरुक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायात् द्वितीयादिर्न भविष्यति [1] ।

## ५८. तृतीया च होश्छन्दसि

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र** :- जौहोत्यादिकस्य हु दानादनयोः इति धातोः प्रयोगे कर्मणः एव द्वितीयातृतीये यथा स्याताम् इत्येतदर्थं सूत्रमिदमारब्धम् । यवाग्वाग्निहोत्रं जुहोति, यवागूमग्निहोत्रं जुहोतीति प्रयोजनम् । परन्त्विदमन्यथैव सिद्धम् ।

[1] भा.पु.स.२ पृ.स.४८६

तथाहि – तृतीयार्थोयमारम्भः । द्वितीया तु कर्मणि द्वितीया इत्येव सिद्धा भविष्यतीति आशङ्क्य कर्तृकरणयोः तृतीया इत्येव तृतीयापि सिद्धा भविष्यति इत्युक्तम् । यतोहि अग्निहोत्रशब्दस्य अर्थद्वयं वर्तते । एकः अग्निः द्वितीयः हविः अर्थात् हव्यं द्रव्यम् । हुधातोरर्थद्वयं वर्तते । एकः प्रक्षेपणं द्वितीयं प्रीणनमिति । यदा 'यवाग्वाग्निहोत्रं जुहोति' इति वाक्ये यवागूशब्दस्य तृतीया विभक्तिर्भवति यदा अग्निहोत्रशब्दे हुधातोः प्रिणनमित्यर्थः । यवाग्वा अग्निं तृप्तं करोतीत्यर्थः । अत्र अग्नितृप्तेः यवाग्वाः साधनत्वात् तृतीया सिद्धा । यदा तु यवागूमग्निहोत्रं जुहोति' इति प्रयोगः तदा तु अग्निहोत्रशब्दस्य हविः इत्यर्थः, हुधातोः तु प्रक्षेपणमित्यर्थः । यवागूरूपद्रव्यस्य अग्नौ देवतोद्देशेन त्यागः इत्यर्थः । प्रक्षेपणरूपक्रियायाः कर्मभूतत्वेन यवाग्वाः कर्मणि द्वितीया इत्येव विभक्तिः सिद्धा । एवञ्च स्वतः एव विभक्तिद्वये सिद्धे पुनरनेन सूत्रेण किञ्चित्साध्यं नास्तीत्यतः सूत्रं प्रत्याख्यातमाकरे [1]।

## ५९. यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी

**सूत्रार्थः** :- यत्र यद् यस्मादधिकं यस्य च ईश्वरवचनं तत्र कर्मप्रवचनीयेन युक्ते शब्दे सप्तमी विभक्ति स्यात् । द्वितीयायाः अपवादः ।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् [2]।

---

[1] भा.पु.स.२ पृ.स.४८८

[2] भा.पु.स.२ पृ.स.४९३

प्र.क :- अत्र अधिरीश्वरे इत्यनेन कर्मप्रवचनीयसंज्ञायां प्राप्तायां कर्मप्रवचनीययुक्ते द्वितीया इति सूत्रेण द्वितीयायां प्राप्तायां सूत्रेणानेन सप्तमीविभक्तिः विधीयते । अधिरीश्वरे इति सूत्रं प्रत्याख्यातमित्यतः तदाश्रित्य प्रवर्तमानमपि सूत्रमिदं प्रत्याख्येयम् [1] ।

## ६०. गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि

**सूत्रार्थः** :- चेष्टाक्रियाणां गत्यर्थानां धातूनामध्ववर्जितेऽनभिहिते कर्मणि कारके द्वितायाचतुर्थ्यौ विभक्ती भवतः ।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- गत्यर्थकधातूनां प्रयोगे शारीरक्रियायां वर्तमानायामध्वभिन्नस्य कर्मणः द्वितीयाचतूर्थ्योः विधानार्थं सूत्रमिदमारब्धम् । तद्यथा ग्रामं ग्रामाय वा गच्छतीति । अत्र क्रियाजन्यफलाश्रयत्वेन अध्वनः कर्मत्वात् कर्मणि द्वितीया इत्येव द्वितीया सिद्धा । एवञ्च अप्राप्तचतुर्थ्याः विधानार्थं सुत्रमिदमारब्धव्यम् । परन्त्वत्र चतुर्थी अन्यथैव सिद्धा भविष्यति । तथाहि – “चतुर्थ्यपि सिद्धा । कथं? सम्प्रदाने इत्येव । न सिध्यति । 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इत्युच्यते । क्रियया चासौ ग्राममभिप्रैति । कया क्रियया? गमिक्रियया क्रियाग्रहणमपि तत्र चोद्यते” इति । एवञ्च क्रियया । यमभिप्रैति सोऽपि सम्प्रदानसंज्ञको भवति । प्रकृते च कर्ता

---

[1] अत्र विभक्तिसिद्धिप्रकारः अधिरीश्वरे इत्यत्रैव उल्लिखितो वर्तते ।

गमनक्रियया ग्राममभिप्रैतीत्यतः चतुर्थी सिद्धा भवति । तस्मादनेन सूत्रेण चतुर्थीसाध्या नास्तीत्यतः सूत्रमिदं प्रत्याख्यातम् [1]।

## ६१. सहयुक्तेऽप्रधाने

**सूत्रार्थः** :- सहार्थेन युक्ते अप्रधाने तृतीया स्यात् ।

**प्र.अ** :- अप्रधानग्रहणं प्रत्याख्यातम् ।

**प्र.क** :- पुत्रेण सह आगतः स्थूल इत्यत्र आगमनक्रियायां शाब्दान्वयः स्थूलस्य तस्मात्समासः । पुत्रस्य तु अर्थेनान्वय इति कृत्वा आर्थोऽन्वयः । सहयुक्ते इति केवले सूत्रे क्रियमाणे सहयोगो यथा पुत्रस्य तथा स्थूलस्यापि इति कृत्वा पुत्रेण इतिवत् स्थूलस्यापि तृतीयापत्तिः । तद्वारणार्थमप्रधानग्रहणं क्रियते । क्रियमाणे चाप्रधानग्रहणे अप्रधानस्यैव सहयोगे तृतीया इति कृत्वा प्रकृते पितृशब्दस्य सहयोगसत्वेऽपि न तृतीया अप्रधानत्वाभावत् । एवं प्रयोजनमभिसन्धाय अप्रधानग्रहणं यत्कृतं तत्प्रत्याख्यायते ।

सह योगोऽस्ति इति कृत्वा तृतीया वा स्थूलशब्दात्, कारकयोगात् प्रथमा वा इति चिन्त्यमाने उपपदविभक्तेः कारकविभक्तिः बलीयसीति हेतोः प्रथमैव सिध्यति । एवञ्च प्रधाने तृतीयायाः प्रवृत्त्यभावात् प्रधाननिवृत्यर्थेनाप्रधानग्रहणं व्यर्थं सत् प्रत्याख्यातमाकरे ।

---

[1] भा.पु.स.२ पृ.स.४९६

**प्र.सू.स्व :-** सह युक्ते[1] ।

## ६२. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा

**सूत्रार्थः :-** प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात् ।

**प्र.अ :-** अत्र वचनमात्रयोः शब्दयोः मध्ये अन्यतरस्य प्रत्याख्यानं कृतम् ।

**प्र.क्र :-** वचनग्रहणे मात्रग्रहणे च एकमेव प्रयोजनमुक्तम् । अतस्तत्रैकं प्रत्याख्यातम् । तथाहि राम इत्यादिषु प्रातिपदिकार्थ उक्ते सङ्ख्यार्थमेव प्रथमा । परन्तु एको द्वौ इत्यादिषु सङ्ख्यैव प्रातिपदिकार्थ इति कृत्वा सुबुत्पत्तिरेव न स्यात् । उक्तार्थानामप्रयोग इति न्यायानुरोधेन । अतो वचनग्रहणमुक्तेष्वपि एकत्वादिषु प्रथमासाधनार्थमिति ।

एवं मात्रग्रहणस्य प्रयोजनं किमिति विचिन्त्यमान आहुः एतन्मात्रे प्रथमा इत्येतदर्थं मात्रग्रहणमिति । एतच्च प्रयोजनमन्यथैव सिद्धम् । कटं करोतीत्यादिषु प्रातिपदिकार्थमात्रमधिकं नास्ति अपितु कर्मत्वमप्यधिकं भातीति कृत्वा द्वितीयादयो बाधिका भवन्ति । अत एतन्मात्रे प्रथमा भवतीति मात्रग्रहणस्य प्रयोजनं न । एवं तर्हि उक्तेष्वप्येकत्वादिषु प्रथमासाधनं प्रयोजनमिति । अत्र च मात्रशब्दस्सामान्यवचनः । एवं च एक इत्यनेन प्रातिपदिकेन एकत्वमिति

[1] भा.पु.स.२ पृ.स.५०२

प्रातिपदिकार्थ उक्तश्चेदपि पुनः प्रथमासाधनार्थम्मात्रग्रहणम् । एवञ्च निरुक्तयोरुभयोरप्येकमेव प्रयोजनमिति कृत्वा वचनग्रहणं प्रत्याख्यायते ।

**प्र.सू.स्व** :- प्रातिपदिकार्थलिङ्गपरिमाणमात्रे प्रथमा, अथवा प्रातिपदिकलिङ्गपरिमाणवचने प्रथमा (उपक्रमानुरोधात्) [1] ।

**चतुर्थः पादः**

## ६३. द्विगुरेकवचनम्

**सूत्रार्थः** :- द्विग्वर्थः समाहारः एकवत्स्यात् ।

**प्र.अ** :- सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क्र** :- तद्धितार्थोत्तरपदसमाहारे च इत्यनेन विधीयमानः यः समानाधिकरणः तत्पुरुषः संख्यापूर्वः समासः स संख्यापूर्वो द्विगुः इति सूत्रेण द्विगुसंज्ञामाप्नोति । तत्र तद्धितार्थोत्तरपदसमाहारद्विगुषु समाहारद्विगौ एकवद्भावविधानार्थं सूत्रमिदमारब्धम् । वक्तीति वचनम्, एकस्य वचनम् एकवचनमिति व्युत्पत्तेः समाहारस्यैव एकार्थवाचकत्वमित्यतः तत्रैवास्य प्रवृत्तिः । पञ्चानां मूलानां समाहरः पञ्चमूली इति सिध्यति । परन्त्विदमन्यथापि सिद्धम् । तथाहि – "न वा समाहारैकत्वात् । न वा योगारम्भेणार्थः । किं कारणम्? । समाहारैकत्वादेकवचनं

[1] भा.पु.स.२ पृ.स.५१५

भविष्यति" इति । अर्थात् सूत्रेणानेन समाहारे एव एकवद्भावः वक्तव्योऽस्ति नान्यत्र । तस्य तु समाहारस्य स्मूरूपत्वात् अभिधेयस्य एकत्वात् एव एकवचनं सिद्धम् । न हि तत्र नियमेन किञ्चित्साध्यमस्ति । अयं भावः – तिरोहितावयवभेदः समूहरूपः समाहारो द्विग्वर्थः । तस्यैकत्वात् वनयूथादिवत् सिद्धमेकवचनमिति नार्थो अनेन योगेन । अत इदं सूत्रं प्रत्याख्यातम्[1] ।

## ६४. विभाषा समीपे

**सूत्रार्थः :-** अधिकरणतावत्वस्य सामीप्येन परिच्छेदे समाहार एव इत्येवं रूपो नियमो वा स्यात् ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** सूत्रस्यास्य प्रयोजनं किमिति प्रश्ने आह उपदशं पाणिपादम्, उपदशाः पाणिपादा इति । अत्र च पाणी च पादौ चेति इतरेतरे, समाहारे च प्राप्ते प्राण्यङ्गानां समाहार एवेति नियमः प्राप्तः । तदनन्तरं द्रव्यसङ्ख्याया यदि अवगमो भवति तर्हि तत्र समाहार एव इति नियमो नेति प्रतिषेध अधिकरणैतावत्वे च इति सूत्रेण आरब्धः । स प्रतिषेधो विकल्पेन भवतीति अनेन सूत्रेण विधीयते । अतः क्रमात् उपदशं पाणिपादम्, उपदशाः पाणिपादाः इति च सिध्यति । एवं रूपद्वयसाधनार्थमिदं सूत्रमपेक्षितमिति । एतच्च प्रयोजनमन्यथैव सिद्धम् । यदा उपदशं पाणिपादम् इति विवक्षा तदा अव्ययीभावसमासः क्रियते । यदातु

[1] भा.पु.स.२ पृ.स.५३४

उपदशाः पाणिपादा इति विवक्षा तदा अन्यपदार्थो बहुव्रीहिः क्रियते । संख्याऽव्ययेभ्योऽव्ययीभावबहुव्रीह्योः विधानसत्वात् । एवं सूत्रस्यास्य प्रयोजनमन्यथैव उभाभ्यां समासाभ्यां क्रियत इति कृत्वा सूत्रमिदं नापेक्षितम्[1] ।

## ६५. इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ

**सूत्रार्थः :-** अन्वादेशविषयस्य इदमः अनुदात्तः अशादेशः स्यात् तृतीयादौ।

**प्र.अ :-** अशादेशे शकारः प्रत्याख्यातः ।

**प्र.क :-** एनमित्यत्र एनादेशे कृते अनेन अश् विधीयते । अकारस्य अकारो विधीयत इति अकारस्य अकारविधाने प्रयोजनाभावात् अकारविधानसामर्थ्यादेव सर्वादेशत्वं वक्तुं शक्यम् । तथापि कश्चिदेवम् आशङ्केत । अनुदात्तार्थः अकारो विधीयते इति । एवञ्च सामर्थ्यात् अन्यत्रोक्तमिति कृत्वा सर्वादेशत्वं न सिद्धम् । इति चेत् आह - भाष्ये तावत् शकारमनुच्चार्य अ अ इति प्रश्लेषनिर्देशङ्कृत्वा अनेकाल्त्वमादाय सर्वादेशत्वं साधितमित्यतः शित्करणं त्यक्तुं शक्यम् । 'प्रष्लिष्टनिर्देशोऽयम् अ अ अनेकाल्शित्सर्वस्य इति सर्वादेशो भविष्यति' इति।

**प्र.सू.स्व :-** इदमोऽन्वादेशेऽनुदात्तः तृतीयादौ[2] ।

---

[1] भा.पु.स.२ पृ.स.५४१

[2]भा.पु.स.२ पृ.स.५४८

# तृतीयाध्याये प्रत्याख्यातानि सूत्राणि

**प्रथमः पादः**

### ६६. धातोः कर्मणः समानकर्तृकादिच्छायां वा

**सूत्रार्थः :-** इषिकर्मणः इषिणैककर्तृकात् धातोः इच्छायामर्थे सन् स्यात् ।

**प्र.अ :-** वाधातुग्रहणे प्रत्याख्याते ।

**प्र.क्र :-** इच्छासमानकर्तृकत्वे सति इच्छाकर्मीभूतो यो व्यापारः तद्वाचकाद्धातोस्सन् वा स्यात् । तस्मात् पठितुमिच्छति पिपठिषतीति सिद्ध्यति । एवञ्च पक्षे वाक्यप्राप्तिः वाग्रहण्स्य प्रयोजनम् । परन्तु तद्वाग्रहणं भाष्यकारेण प्रत्याख्यातम् । प्रयोजनस्यान्यथासिद्धत्वात् । स्वभावतः एव वाक्यं प्रत्ययश्च सिद्ध्यति । तत्र स्वाभाविके वृत्तिपक्षे प्रत्ययः प्राप्नोति, वृत्तेरभावस्थाने स्वभावत एव वाक्यं सिद्ध्यति । तस्मान्नार्थो वा वचनेन । न च तद्वावचनं प्राप्तप्रत्ययसंज्ञाया विकल्पार्थं भवत्विति वाच्यम् । संज्ञाया भावाभावाभ्यां विशेषाभावात् । धातुग्रहणं चेह न कार्यम् । कर्मणस्समानकर्तृकादिच्छायां सन् भवतीत्येव धातोरुत्पत्तिर्भविष्यति । तस्मात् समानकर्तृकादिच्छायामित्येव सूत्रानुपूर्वी ।

**प्र.सू.स्व :-** समानकर्तृकादिच्छायाम् [1]।

---

[1] भा.पु.स.३ पृ.स.२७

## ६७. काम्यच्च

**सूत्रार्थः :-** इषिकर्मणः एषितृसम्बन्धिनश्च सुबन्तादिच्छायामर्थे काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रीयति ।

**प्र.अ :-** चकारोऽत्र प्रत्याख्यातः ।

**प्र.क :-** चकारः किमर्थः इति पृष्टे आह – चकारस्येत्संज्ञायां चित इत्यन्तोदात्तो यथा स्यात् इति स्वरार्थः । परन्तु धातुस्वरेणैव स स्वरो गतार्थो भवति । तस्मात् चकारो न कर्तव्यः । ककारस्येत्संज्ञायां माभूदित्येतदर्थम् आदितश्चकारः क्रियते । एवञ्च ककारश्रवणार्थः चकार इति चेत् आह –

ककारो नेत्वभाक् इत्कार्याभावात् । ननु लोप एव इत्कार्यमिति वदाम इति चेत् – लोपः कार्यं भवितुन्नार्हति । अत्र हि शास्त्रे उपदेशः कार्यार्थो वा श्रवणार्थो वा विज्ञायन्ते । प्रकृते च ककारस्य कार्यार्थत्वाभावः । श्रवाणार्थोऽपि न । तस्मात् ककारोपदेशः अनर्थक इति चेत् – अग्निचित्काम्यति इत्यत्र गुणार्थ (गुणप्रतिषेधार्थः) इति चेत् – न । गुणस्य प्राप्तेरेवाभावात् । यतो हि धातोः विहितः प्रत्ययः शेषः आर्धधातुकप्रत्ययो भवति । प्रकृते चायन्न धातोर्विहितः । न च उपयट्काम्यतीत्यत्र सम्प्रसारणार्थं कित्करणमित्यपि न वाच्यम् । कित् यजादिना विशेष्यत इति कृत्वा अस्य च यजादेर्विहितत्वाभावात् न सम्प्रसारणार्थं कित्करणम् । अथवा दृष्टानुविधिश्छन्दसीति कृत्वा संप्रसारणस्याभावात् छन्दसि कित्करणं नास्तीति सिद्धम् । एवञ्च प्रयोजनाभावादेव ककारे इत्संज्ञाया अप्रवृत्तौ ककारस्येत्वाभावसम्पादनार्थः चकारो न कार्यः ।

**प्र.सू.स्व :-** काम्यच्[1] ।

## ६८. लोहितादिडाज्भ्यः क्यष्

**सूत्रार्थः :-** लोहितादिभ्यः डाज्भ्यः च भवत्यर्थे क्यष् स्यात् ।

**प्र.अ :-** कित्करणमादिशब्दश्च प्रत्याख्यायते ।

**प्र.क :-** उरुया, धृष्णुया इत्यादिषु "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घो माभूदित्येतदर्थं क्यषि कित्करणम् । परन्तु छान्दसत्वात् छन्दसि च दृष्टानुविधित्वात् न दोषः । आदिशब्दोऽपि प्रत्याख्यातोऽस्ति । अपठितस्य सङ्ग्रहार्थमपि अयमादिशब्दो न भवतीति कृत्वा मटमटायते, मटमटायति इत्यादि न सिध्येत् । तस्मात् आदिशब्दो न पठनीयः ।

**प्र.सू.स्व :-** लोहितडाज्भ्यः क्यष्[2] ।

## ६९. नित्यं कौटिल्ये गतौ

**सूत्रार्थः :-** गत्यर्थात् कौटिल्ये एव यङ् स्यात् ।

**प्र.अ :-** कौटिल्यग्रहणं प्रत्याख्यायते ।

---

[1] भा.पु.स.३ पृ.स.४०

[2] भा.पु.स.३ पृ.स.४६

**प्र.क :-** कुटिलं व्रजति वाव्रजति । नित्यग्रहणकर्तुः सूत्रकारस्य मते वाव्रजतीत्यस्मात् योऽर्थः प्रतीयते स एवार्थः कुटिलं व्रजतीत्यस्मादपि प्रतीयत एव । तस्मादेव नित्यग्रहणम् । तत्क्रियमाणं तदर्थप्रतिपादनयोग्यवाक्यं न प्रयोक्तव्यमित्यर्थं गमयति । परं वार्तिककाराणां मते तावत् वाक्यात् गतिकौटिल्यं न गम्यते । कुत इति चेत् - कुटिलं पन्थानं गच्छतीत्यादिषु कौटिल्यस्य अर्थान्तर एव अन्वयसम्भवात् । समानार्थस्यैव वाक्यस्य वृत्त्या बाध उचितः, न तु अर्थान्तरे विद्यमानस्य । अतो वाक्यस्य व्यावृत्त्यर्थत्वेन नित्यग्रहणं न कर्तव्यमिति यावत् ।ततश्च कौटिल्ये गतौ इति सूत्रम्[1] ।

**प्र.सू.स्व :-** कौटिल्ये गतौ[2] ।

---

[1] तत्र दीक्षिताः - नित्यशब्दः अवधारणार्थः । तत एव तक्रकौण्डिन्यन्यायानित्यत्वं गम्यते । अन्यथा "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यादौ सूत्रेण भृशार्थे, पौनःपुन्ये वा यङ्विधीयते । नित्यं कौटिल्ये गतौ इति सूत्रेण तु गतौ यदा कौटिल्यमवगम्यते तदा यङ् विधीयते । पुनःपुनः अतिशयेन वा भवति बोभूयते, कुटिलं व्रजति वाव्रजतीति च क्रमेणोदाहरणानि । परमत्र पुनःपुनः कुटिलं व्रजतीत्यत्र यङ् समभिव्याहारत्वप्रयोजको वा उत कुटिलगतित्वप्रयोजको वा इति विचिन्त्यमाने नित्यग्रहणसामर्थ्यात् कुटिलगतावेव यङ्भवतीति गम्यते । अयमर्थः तक्रकौण्डिन्यन्यायनित्यत्वे एव भवतीति कृत्वा नित्यग्रहणवैयर्थ्यभिया तन्न्यायस्य अनित्यत्वं ज्ञाप्यत इति । परत्वादपि वक्तुं शक्यः ।

नागेशास्तु - निरुक्तन्यायस्य तु विधेयविषयः, अचारितार्थ्यविषयश्च मिदचोन्त्यात् परः इति सूत्रभाष्यानुरोधात् । यङ् तावत् क्रियासमभिव्याहाराविवक्षायामपि प्रवर्तत इत्यचारितार्थ्याभावात् नात्र न्यायविषयता । तस्मात् वाक्येन तावत् वृत्त्या योऽर्थः प्रतीयते स न प्रतीयत अनभिधानात् इति प्रत्याख्यातम् ।

[2] भा.पु.स.३ पृ.स. ५६

## ७०. सनाद्यन्ता धातवः

**सूत्रार्थः :-** सनादयः प्रत्यया अन्ते येषां ते धातुसञ्ज्ञाः स्युः ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** "भूवादयो धातवः" इत्येव धातुसंज्ञायां सिद्धायां किमनेन सूत्रेण इत्यादिमः प्रश्नः । वक्तुरयमाशयः – भूवादयो धातव इत्यत्र वदेः औणादिक इञ्, तस्मात् वदन्तीति वादयः । भूशब्देन क्रियोच्यते । षष्ठीसमासः । तस्मात् सर्वेऽपि क्रियावाचिन इति कृत्वा तेनैव सूत्रेण धातुत्वं सिध्यतीति ।

परं न सिध्यति, कुत इति चेदाह – "भूवादयो धातवः" इत्यत्रैक आदिः प्रकारवाच्यपरः व्यवस्थावाची । क्रियावाचित्वरूपं प्रकारवत्वम् । तस्मात् क्रियावाचिनो भ्वादयो धातुसज्ञाः स्युः इत्यर्थः सिद्ध्यति । एतादृशार्थस्वीकारेण भ्वादिगणपठितानामेव धातुत्वं नान्येषाम् । तत्र पाठाभावात् तेन सूत्रेण धातुसंज्ञा न सिद्ध्यतीतीदं सूत्रमपेक्षितम् । "अस्तेर्भूः" "ब्रुवो वचिः" "चक्षिङः ख्याञ्" इत्यपठितानां कथं धातुत्वमिति चेत् - यद्यप्येतदन्ताः तत्रापठिताः तथाप्येतेषां प्रकृतयः तु पठिता एव वर्तन्ते । तत्र च स्थानिवद्भावात् धातुत्वं सिध्यति । यद्यपि सनाद्यन्ता न पठ्यन्ते तथापि इषु इच्छायामित्यर्थे सनादयो विहिता इति कृत्वा स्थानिनि विद्यमानं धातुत्वमादेशे आदाय धातुत्वव्यवहारः सिध्यति । एतेषां सनादीनां स्थानिनिवृत्तिपूर्वकादेशत्वाभावात् स्थानिवत्वबोधक-शास्त्रप्रवृत्तिरेव नेति वाच्यम् - यस्य शब्दस्य प्रसङ्गे यो विहितस्स तस्यादेशः इति रूढिस्तु इह नाश्रीयते । परन्तु अतिदिश्यते यस्स आदेश इति स्वीकारात्सनादीनामपि

अतिदिश्यमानत्वात् आदेशत्वे स्थानिवत्सूत्रप्रवृत्ति-विषयत्वात् स्थनिवत्वेनैव धातुत्वे सिद्धे नेदं सूत्रं दृष्टप्रयोजनवत्[1] ।

## ७१. यसोऽनुपसर्गात्

**सूत्रार्थः** :- अनुपसर्गात् यसु प्रयत्ने इति धातोः श्यन् वा स्यात् ।

**प्र.अ** :- अनुपसर्गात् ग्रहणं प्रत्याख्यातम् ।

**प्र.क** :- अनुपसर्गात् यसु प्रयत्ने इति धातोः श्यन् वा स्यात् । यस्यति / यसति । तस्मात् उपसर्गपूर्वकोऽयं यसुधातुः नित्यं श्यन्विकरणः सिद्ध्यति । आयस्यति / प्रयस्यति इति । अत्र सूत्रे अनुपसर्गादिति पदाभावेऽपि निरुक्तं प्रयोजनं सिध्यतीति हेतोः भाष्येऽनुपसर्गादिति ग्रहणं प्रत्याख्यातम् । सूत्रेऽस्मिन् अनुपसर्गादिति पदम्मास्तु, केवलं यसः इति सूत्रं भवतु । यसु प्रयत्ने इत्यस्य श्यन्वा स्यादित्यर्थः । यस्यति यसतीति रूपं सिध्यति । एवम् आयस्यति, आयसति, प्रयस्यति, प्रयसति इति रूपं स्यात् इति दोषे आशङ्किते, समादधाति -

"यसोऽनुपसर्गात्" इति सूत्रानन्तरं संयसश्चेति योगो यो वर्तते स नियमाय भवति । समित्युपसर्गपूर्वकादेव यस्धातोः श्यन्वा स्यादिति । एवञ्च सँय्यसति सँय्यस्यतीति रूपं सिध्यति । तथैव नियमेन आयसति, प्रयसति इति विकरणरहितानां रूपाणां च व्यावृत्तिः सिद्ध्यति । सम्भिन्नोपसर्गपूर्वकयस्धातोः तावत् नित्यमेव श्यन्निति अर्थतः फलति । एवञ्च यदनुपसर्गग्रहणे यस्यति,

---

[1] भा.पु.स.३ पृ.स.७८

यसति, आयस्यति, आयसति, प्रयस्यति, प्रयसतीति प्रयोजनं तदनुपसर्गग्रहणाभावेऽपि सिद्ध्यतीत्यतो यस इत्येव सूत्रम् ।

**प्र.सू.स्व :-** यसः ।[1]

## ७२. तनादिकृञ्भ्य उः

**सूत्रार्थः :-** तनादेः कृञः च उप्रत्ययः स्यात् ।

**प्र.अ :-** अत्र कृञ्ग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** तनादिभ्य उः इत्येव कृञोऽपि उञ् प्रत्यये पुनः करोतिग्रहणं कुत इति चेत् तनादेः अन्यत् कार्यं यदनुनासिकलोपादिकं तन्माभूदित्येतदर्थमिति न च वाच्यम् । अनुनासिकाभावादेव लोपस्य अप्राप्तेः । तस्मात्कृञ्ग्रहणं न कार्यम् । तनादिभ्य उः इति केवले सूत्रे क्रियमाणे कृञपि तनादिरिति कृत्वा तथासोः परयोः तनादेर्विधीयमानः सिज्लुक् कृञोऽपि प्राप्नोति । तन्माभूदित्येतदर्थं कृञ् पृथक्पठ्यत इति चेत् – अत्र ह्रस्वादङ्गादित्यवश्यं सिचो लोपो भवति । ह्रस्वादङ्गादिति सिचो लोपश्चेत् तस्यासिद्धत्वात् चिण्वद्भावो न भवति । "तनादिभ्यस्तथासोः" इत्यनेन चिणोऽदर्शनं चेत् तस्य सिद्धत्वात् चिण्वद्भावस्स्यात् । चिण्वद्भावो दोषाय । तस्मात् कृञ्ग्रहणं पृथगेव कार्यम् इति

---

[1] भा.पु.स.३ पृ.स.११०

चेत् – तनादिभ्यस्तथासोरित्यनेन सिज्लोपो विकल्पेन भवतीति कृत्वा चिण्वद्भावो न दोषाय । तस्मात् कृञ्ग्रहणं प्रत्याख्यातम् ।

**प्र.सू.स्व :-** तनादिभ्य उः ।[1]

## ७३. कर्मवत्कर्मणा तुल्यक्रियः

**सूत्रार्थः :-** कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् स्यात् । पच्यते ओदनः ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** देवदत्त ओदनं पचति इत्यत्र देवदत्तः कर्ता, ओदनङ्कर्म, पचतिः क्रिया । प्रकृते देवदत्त ओदनं पचति इत्यत्र विक्लृत्तिरूपा क्रिया कर्तरि वर्तते । तस्मात् सा कर्मस्था किया । तया कर्मस्थया क्रियया तुल्या क्रिया कर्तुः ओदनस्य वर्तते । यदा पाचकनिष्ठफूत्कारादिश्रमो न विवक्षितो भवति । तस्मात्कर्तुः ओदनस्य कर्मवद्भावे कर्मणि यथा प्रक्रिया तद्वत्प्रक्रिया सिद्ध्यतु इत्येतदर्थं सूत्रमिदमारब्धम् । ओदनः पच्यते, काष्ठं भिद्यते इत्यादिषु कर्मवत्कार्यार्थमिदं नारम्भणीयम् । ऋतेऽप्येतत्सूत्रं कार्यं सिद्ध्यति । कुत इति चेत् – प्राकृतकर्मत्वात् । कटं करोतीत्यादिषु यथा प्राकृतं कर्म वर्तते तद्वत् प्रकृतेऽपि प्राकृतमेव स्वाभाविकमेव कर्म वर्तते । तस्मादिदं न वक्तव्यम् । नन्वत्र कर्म स्वाभाविकमित्यस्य परिज्ञानं कथमिति चेत् - आत्मसँय्योगे कर्मभिन्नस्य कर्तुः कर्मदर्शनात् । यथा एकस्यैव

---

[1] भा.पु.स.३ पृ.स.१११

वस्तुनः विवक्षाभेदेन कर्मत्वेन, कर्तृत्वेन व्यवहारो दृश्यते । तद्वत् प्रकृतेऽपि विवक्षाभेदेनैव कर्तुरोदनस्य कर्तृत्वं कर्मत्वञ्च गम्यते । तस्मान्नारब्धव्यम् ।[1]

## ७४. धातोः

**सूत्रार्थः** :- इतोऽग्रे विधीयमानाः प्रत्यायाः धातोरेव स्युरित्यातृतीयाध्यायपरिसमाप्तेः अधिकारः ।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र** :- प्रातिपदिकसंज्ञावारणादिप्रयोजनाद्यर्थत्वेन योगोयम् आरम्भणीय इत्युक्त्वा अन्ते अभिहितं यत् धातुग्रहणानर्थक्यम् । तत्र च भाष्ये तथाहि - "धातुग्रहणमनर्थकं यङ्विधौ (धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ) धात्वधिकारात्"[2] इति । तत्र च भाष्ये " धातुग्रहणमनर्थकं । किम् कारणम् ? यङ्-विधौ धात्वधिकारात् । यङ्-विधौ धातुग्रहणं प्रकृतमनुवर्तते । तच्चावश्यमनुवर्त्यम्" इति । एवञ्चावश्यं धातोरित्यनुवर्त्य बहुप्रयोजनवत्वात्[3]।

---

[1] भा.पु.स.३ पृ.स.१२१

[2] भा.पु.स.३ पृ.स.१२७

[3] भा.पु.स.३ पृ.स.१३०

यद्यपि च धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इत्यत्र भाष्ये धातुग्रहणं प्रत्याख्यातमिव दृश्यते । अथापि धातोः इति सूत्रस्थभाष्यप्रामाण्येन धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इति सूत्रस्थभाष्यस्य अत्रैव प्रयोजनाभावप्रतिपादकत्वम् । इतरत्र अनुवृत्त्यर्थं तु इदं धातुग्रहणमपेक्षितम् इत्यङ्गीकर्तव्यम् ।

### ७५. कृदतिङ्

**सूत्रार्थः :-** सन्निहिते धात्वधिकारे कृद्भिन्नाः प्रत्ययाः कृत्संज्ञाः स्युः ।

**प्र.अ :-** अतिङ् ग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** धात्वधिकारे विहितानां तिङां कृत्संज्ञावारणार्थं अतिङ्ङित्युच्यते । तत्र सत्यामपि तिङां कृत्संज्ञायां दोषो नास्ति । तस्मात् प्रतिषेधार्थं अतिङ्ग्रहणं न कार्यम् । तथाहि - एकत्वादिषु अर्थेषु स्वादयो विधीयन्ते । ते चात्र तिङोक्ता एकत्वादय इत्यतः सत्यामपि प्रातिपदिकसंज्ञायां न प्रवर्तन्ते । उक्तार्थानामप्रयोग इति न्यायात् । स्त्रियां टाबादयो विधीयन्ते । न च तिङन्तस्य स्त्रीत्वेन योगोऽस्ति । अपत्यादिष्वर्थेषु अणादयो विधीयन्ते । न च तिङन्तस्य अपत्यादिभिर्योगोऽस्ति । किञ्च यदयमाचार्यः अतिशायने तमबिष्ठनौ इत्युक्त्वा तिङश्च इति योगमारभते, तज्ज्ञापयति 'न तिङन्तादनादयो भवन्ति' इति । तस्मात् सूत्रे अतिङ्ग्रहणं न कार्यम् ।

**प्र.सू.स्व :-** कृत्[1] ।

**द्वितीयः पादः**

### ७६. स्पृशोऽनुदके क्विन्

**सूत्रार्थः :-** अनुदके सुप्युपपदे स्पृशः क्विन् ।

**प्र.अ :-** नकारोऽत्र प्रत्याख्यायते ।

---

[1] भा.पु.स.३ पृ.स.१३४

**प्र.क :-** नकारः किमर्थमुच्चार्यते । "ञ्नित्यादिर्नित्यम्" इति आद्युदात्तो यथा स्यादिति । तस्मात् इत्संज्ञको नकार उच्चार्यते । आद्युदात्तत्वसम्पादनार्थं तावत् नकारो न पठनीयः । धातुस्वरेणैव सिद्धत्वात् । विशेषणार्थः तर्हि भवतु नकारः । "क्विन्प्रत्ययस्य कुः" इतीत्युच्यमाने सन्देहः स्यात् क्विब्वायं क्विन्वेति । तस्मान्नकारः सन्देहनिवारणार्थत्वेन पठनीय इति चेत् न । सर्वसन्देहेषु इदमुपस्थितं भवति "व्याख्यानतो विशेषप्रतिपत्तिः न हि सन्देहादलक्षणमिति"(प) । तस्मात्सन्देहो निवार्यते । नकारो न कार्यः ।

**प्र.सू.स्व :-** स्पृशोऽनुदके क्वि ।[1]

## ७७. ननौ पृष्टप्रतिवचने

**सूत्रार्थः :-** भूते लृट् स्यात् ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** अकार्षीः किम् ? अत्र क्रियायाः समाप्तिर्जाता । तस्मात् भूतसामान्यात् लुङ्कृतः । अत्र भूतेऽपि लडर्थं सूत्रमिदम् । ननौ पृष्टप्रतिवचने गम्यमाने । तस्मात् ननु करोति भोरिति सिद्धम् । ननौ पृष्टस्य प्रतिवचनं यदस्ति तस्य गम्यमानत्वात् इदं सूत्रं भूते लडर्थं न कार्यम् । क्रियाया असमाप्तेर्विवक्षितत्वात् । एवञ्च ननु पचति भोः इत्यादिषु निवृत्तायामपि पाकादिक्रियायां तत्कृतस्य श्रमादेरनुवर्तमानत्वात् वर्तमाने लडित्यनेनैव लड्सिद्ध्यति । ननु च भोः यदि वर्तमाने लट् इत्येव लट्

---

[1] भा.पु.स.३ पृ.स.१७०

भविष्यति, तर्हि शतृ-शानचौ च प्राप्नुतः इति चेत् इष्येते एव शतृ-शानचौ ननु मां कुर्वन्तं पश्य, ननु मां कुर्वाणं पश्य इति । तस्मात् सूत्रारम्भे इष्टासिद्धिरेव । तस्मात्सूत्रमिदन्नारम्भणीयम् ।[1]

**तृतीयः पादः**

## ७८. लृट् शेषे च

**सूत्रार्थः :-** भविष्यदर्थाद्धातोः लृट् स्यात् क्रियार्थायां क्रियायां सत्यामसत्याञ्च ।

**प्र.अ :-** लृट् च इति प्रत्याख्यायते ।

**प्र.क्र :-** तुमुण्ण्वुलौ क्रियायां क्रियार्थायामिति प्रागुक्तम् । ततोऽन्यश्शेषः । तस्मिन् भविष्यदर्थाद्धातोः लृट् भवतीति सिद्धम् । चकारात् क्रियार्थायां क्रियायामिति लभ्यते । एवञ्च वृत्त्यर्थः साधितः ।

सूत्रोदाहरणानि – करिष्यामि, हरिष्यामि, करिष्यामीति व्रजति, हरिष्यामीति व्रजति । इति क्रियार्थायां क्रियायामसत्यां सत्यामिति क्रमेणोदाहरणानि ।

शेषे इति क्रियमाणे क्रियार्था क्रिया यत्र नस्ति तत्र भवति करिष्यामि, हरिष्यामि इत्यदि । च शब्दबलात् यत्र क्रियार्थाक्रिया वर्तते तत्र भवति करिष्यामीति व्रजति, हरिष्यामीति व्रजतीति । किमत्र चकारः कर्तव्यो न वा इति प्रश्नः । न कर्तव्य इत्युत्तरम् । कुत इति चेत् चशब्दप्रयोजनस्य अन्यथा साधयितुं शक्यत्वात् ।

---

[1] भा.पु.स.३ पृ.स.१९४

तथाहि - "लृट् शेषे च" इति सूत्रम् । अत्र क्रियार्थायां क्रियायामित्यनुवर्तते । तस्मात् करिष्यामीति व्रजति, हरिष्यामीति व्रजति इति सिद्धम् । ततः शेषे इति सूत्रम् । शेषे लृट् भवति । तेन च हरिष्यामि, करिष्यामीति सिध्यति । एवञ्च योगविभागेन चकारः प्रत्याख्यातो भवति । लृट् भवतीत्येतावतैव सिद्धे पुनश्शेषग्रहणं यत् तस्यैतत् प्रयोजनं योगाङ्गं विज्ञायेत इति । तस्मात् लृट् शेषे इत्येव सूत्रं सिद्धम् ।

**प्र.सू.स्व :-** शेषे ।[1]

## ७९. अकर्तरि च कारके संज्ञायाम्

**सूत्रार्थः :-** कर्तृभिन्ने कारके घञ् स्यात् ।

**प्र.अ :-** कारके इति संज्ञायामिति च प्रत्याख्यायते ।

**प्र.क्र :-** कर्तृभिन्ने कारके इत्येतदर्थं अकर्तरि च कारके इत्युच्यते । कर्तृभिन्नत्वे सति कारकत्वं सूत्रेणानेन विधीयमानस्य घञः प्रवृत्तौ निमित्तम् । तत्र च कर्तृभिन्नत्वे सति कारकत्वमित्यर्थप्राप्त्यर्थं कारके इति दलस्य योगः कृतः । तच्च विनापि कारकग्रहणं सिद्धं भविष्यति । तथाहि- "नञिवयुक्तमन्यदृशाधिकरणे तथा ह्यर्थावगतिः" । नञ् युक्तमिव युक्तं चान्यस्मिंस्तत्सदृशे कार्यं विज्ञायते तथा ह्यर्थो गम्यते । तद्यथा अब्राह्मणमानय इत्युक्ते ब्राह्मणसदृशं पुरुषमानयति । नासौ लोष्टमानीय कृती भवति । एवमिहापि अकर्तरीति कर्तृप्रतिषेधात् अन्यस्मिन्

---

[1] भा.पु.स.३ पृ.स.२२१

कर्तृसादृश्ये कार्यं विज्ञायते । किञ्चान्यत् अकर्तृ कर्तृसदृशम्? कारकम् । तस्मात् विनापि कारकग्रहणं कारके एव कार्यप्राप्तौ सूत्रेऽस्मिन् कारकग्रहणं न कार्यम् ।संज्ञायां गम्यमानायां घञ्भवतीत्येतदर्थसम्पादनार्थमिह संज्ञायामिति कृतम् । परन्तु संज्ञाभिन्नेष्वपि अर्थेषु घञो दर्शनात् संज्ञायामिति न कार्यम् । यथा – असंज्ञायामिति – को भवता लाभो लब्धः । को भवता दायो दत्त इति । यदि संज्ञाग्रहणं न क्रियते तर्हि कृतः कट इतिवत् कारः कट इत्यत्रापि प्राप्नोति खल्विति नाशङ्क्यम् । कारः कट इत्यादिप्रयोगाणामनभिधानात् संज्ञाग्रहणं त्यक्तुं शक्यम् ।
**प्र.सू.स्व :-** अकर्तरि च[1] ।

## ८०. गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च

**सूत्रार्थः :-** करणे अधिकरणे च कारके गोचरादयः शब्दाः अपि पुल्लिङ्गे घप्रत्ययान्ताः निपात्यन्ते ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

प्र.क्र :- गावश्चरन्ति यस्मिन् स गोचरः,चक्षुरादीनां विषयः । सञ्चरन्ते येन सञ्चरः, मार्गः । वहन्ति येन सः वहः स्कन्धः ।व्रजन्ति यस्मिन् स व्रजः, गोष्ठम् । व्यजन्ति येन स व्यजः, तालवृन्तम् । एत्यापणान्ते यस्मिन् स आपणः, पण्यस्थानम् । निगच्छन्ति यस्मिन् स निगमः, छन्दः ॥ एवञ्च अपेक्षितेऽर्थे रूपप्राप्त्यर्थं सूत्रेणानेन निपातनं व्यधायि । परन्त्विदं सुत्राभावेपि सिद्धम् । तथाहि

---

[1] भा.पु.स.३ पृ.स.२२६

– "गोचरादीनामग्राणं प्रायवचनात् यथा कषो निकषः इति । गोचरादीनां ग्रहणं शक्यमकर्तुम् । घञ्कस्मात् भवति । प्रायवचनात् । यथा निकष इति प्रायवचनात् घञ् न भवति" इति । हलश्च इति सूत्रेण विधीयमास्य घञः, पुंसि संज्ञायां घः प्रायेणेति सूत्रेण विहित घप्रत्ययेण बाधो भवति प्रायग्रहणात् । तस्मात् एतेषां रूपाणां घप्रत्ययान्तत्वेन इष्टसिद्धौ निपातनेन साध्यन्नास्तीत्यतः सूत्रमिदं भाष्ये प्रत्याख्यातम् [1] ।

## ८१. उदङ्कोऽनुदके

**सूत्रार्थः :-** उत्पूर्वादञ्चतेः घञ् स्यात्, न तु उदके ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** उदङ्कोऽनुदके इति सूत्रं नारम्भणीयम् । "हलश्च" इति सूत्रेणैव घञि सिद्धे इदं व्यर्थमिति चेत् – न । "हलश्च" इति सूत्रेण यदि घञ् साध्यते तर्हि उदके अनुदके च घञ् प्राप्नोति । अनुदके नेति वक्तुं सूत्रमिदमारब्धम् इति चेत् – न । "पुंसि संज्ञायां घः प्रायेण" इति सूत्रात् प्रायग्रहणानुवर्तनात् । यथा गोदोहनः, प्रासादन इत्यादौ घञभावस्ततद्वदुत्पूर्वादपि अञ्चतेर्न घञ् । [2]

---

[1] भा.पु.स.३ पृ.स.२३६

[2] भा.पु.स.३ पृ.स.२३७

## ८२. गर्हायां लडपिजात्वोः

**समासः :-** अपिश्च जातुश्च अपिजातू, तयोः ।

**सूत्रार्थः :-** वर्तमानकाले वर्तमने लडिति सूत्रेण लट् विहितः, स कालसामान्ये न प्राप्नोति । तस्मात् कालत्रयेपि अनेन लट् विधीयते गर्हायां गम्यमानायाम् ।

**प्र.अ** :- सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- अपि तत्र भवान् शूद्रं न याजयति, जातु तत्र भवान् वृषलं न याजयति इति सिद्ध्यर्थं सुत्रमिदमारब्धम् । यतोहि प्रयोगस्यास्य कालत्रयेऽपि विवक्षितत्वमस्ति । परन्तु सूत्रमिदं भाष्ये त्यक्तम् । तथाहि – "गर्हायां लड्विधानमनर्थकम् । किं कारणम्? क्रियाया असमाप्तेः विवक्षितत्वात् । क्रियाया अत्र असमाप्तिर्विवक्षिता । एष एव कालो न्याय्यः वर्तमानः कालः यत्र क्रिया अपरिसमाप्ता भवति । तत्र वर्तमाने लडित्येव सिद्धम्" इति । यतो हि अयं दुष्टः शूद्रात् याजनादि दुष्टं कर्म कारयन्नेव भवति । तस्य स स्वभावः सम्पन्नः । अतः यावता सः तत्क्रियां न त्यक्षति तावता सा क्रिया असमाप्तक्रियैव । तस्मादत्र वर्तमाने लट् इति सूत्रेणैव सिद्धम् । ननु च भोः वर्तमाने लट् सूत्रेण यदि लड्क्रियते तर्हि लादेशत्वेन शतृशानचौ प्राप्नुतः इति वाच्यम् । तयोः प्राप्तेः इष्टत्वात् । इष्यते च प्रयोगः अपि मां याजयन्तं पश्य, अपि मां याजयमानं पश्य इति । तस्मात् सूत्रसद्भावे दोष एव । यतो हि सूत्रे सति अवर्तमानकालिकत्वादस्य लटः शतृशानचोरप्राप्तिरेव । तस्मात् सूत्रं न कार्यम्[1] ।

---

[1] भा.पु.स.३ पृ.स.२४६

## ८३. अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि

**सूत्रार्थः** :- गर्हायां गम्यमानायाम् अनवक्लृप्त्यमर्षयोः किंवृत्तस्यायोगेऽपि लिङ्लृटौ स्तः ।

**प्र.अ :-** अकिंवृत्ते इति ग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** "किंवृत्ते लिङ्लृटौ" इत्यनेन किंवृत्ते गर्हायां गम्यमानायां लिङ्लृटौ साधितौ । किँव्वृत्तं नाम विभक्त्यन्तं डतरडतमप्रत्ययान्तत्वेन निष्पन्नम् । किंशब्दस्य डतरडतमप्रत्ययान्तं – कतर कतम इति । विभक्त्यन्तन्तु क इति । तस्मिन् प्रयुज्यमाने गर्हायां गम्यमानायां लिङ्लृटौ स्तः । कः कतरः कतमो वा हरिं निन्देत्, निन्दिष्यति इति । तदनन्तरं प्रकृतसूत्रमारब्धम् । अत्रापि किंवृत्तेरिति यद्यनुवर्तते तर्हि अकिंवृत्ते भवान् हरिं निन्देत् निन्दिष्यति वेति प्रयोगो न सिद्ध्येत् इति धिया अकिंवृत्तेरित्यारब्धम् । परन्तु अग्रे किंवृत्तेरित्यस्याननुवर्तनादेव किंवृत्तेऽकिंवृत्ते च अनवक्लृप्तौ [असम्भावनायां], अमर्षे [अक्षमायां] लिङ्लृटौ भविष्यतः । तस्मात् अकिंवृत्तेरिति न वक्तव्यम् ।

**प्र.सू.स्व :-** अनवक्लृप्त्यमर्षयोरपि ।[1]

## ८४. शेषे लृडयदौ

**सूत्रार्थः** :- यदिशाब्दवर्जिते शेषे उपपदे धातोः परः लृट्-प्रत्ययो भवति चित्रीकरणे गम्यमाने ।

---

[1] भा.पु.स.३ पृ.स.२४६

**प्र.अ** :- अयदौ इति प्रत्याख्यातम् ।

**प्र.क** :- चित्रीकरणं नाम अश्चर्यद्योतनमित्यर्थः ।अन्धो नाम पर्वतमारोक्ष्यति आश्चर्यमेतत् इति । आश्चर्यं यदि स भुञ्जीतेत्यत्र लृटः व्यावृत्यर्थं सूत्रेस्मिन् अयदीति प्रतिषेधः कृतः । परन्त्वत्र यदि योगे आश्चर्यं न प्रतीयते किन्तु सम्भावनमेव तात्पर्यतः प्रतीयते । तस्मात् तन्निमित्तः लिङ् भविष्यति । अतः अप्राप्तः निषेधायोगात् सूत्रेस्मिन् अयदीति नैव कार्यमिति भाष्यकारैरभिहितम् ।

**प्र.सू.स्व :- शेषे लृट्** [1]।

**चतुर्थः पादः**

## ८५. धातुसम्बन्धे प्रत्ययाः

**सूत्रार्थः** :- धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्ताः ततोऽन्यत्रापि स्युः।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- धातुशब्दोऽत्र धात्वर्थपरः । ततश्च धातुसम्बन्धे इत्यस्य धात्वर्थसम्बन्धे इत्यर्थः फलितः । वर्तमानसामीप्ये वर्तमानवद्वा इत्यत आरभ्य लिङर्थे लेट् पर्यन्ताः प्रत्ययाः लकारार्थनिरूपणार्थं वर्तन्ते । इदमपि सूत्रं तत्प्रकरणान्तर्गतम् । सोमयाजी अस्य पुत्रो भवता इति । सोमेन यक्षामाणः य पुत्रः तत्कर्तृकं भवनमित्यर्थः । यद्यपि करणे यजः इति सूत्रेण विहितः णिनिः भूते अथापि प्रकृते अनद्यतन भविष्यति भवति । इति प्रयोजनम् । परन्त्विदं सूत्रं विनापि सिद्धम् ।

---

[1] भा.पु.स.३ पृ.स.२४७

तथाहि – "धातुसम्बन्धे प्रत्ययानां यथाकालविधानात् सिद्धम् । यथाकालविहिता एव एते प्रत्ययाः स्वेषु स्वेषु कालेषु प्रयुज्यन्ते । उपपदस्य तु कालान्तरम् । वाक्यमेवैतदेवञ्जातीयकं प्रयुज्यते । अग्निष्टोमयाजीत्येतत् तस्मिन् भविता । कस्मिन् ? योस्य पुत्रो जनिता । कदा ? यदानेनाग्निष्टोमेनेष्टं भवति" इति । अर्थात् प्रकृतोदाहरणे भूते एव णिनिर्विधीयते । जनितेत्येतत्सम्बन्धात् तु भाविव्यपदेशप्रतिपत्तिः यथा अस्य सूत्रस्य शाटकं वय इति । 'यदि शाटको न वातव्यः । अथ वातव्यः न शाटकः । शाटको वातव्यश्चेति विप्रतिषिद्धम् । स पश्यति – भाविनी खल्वस्य संज्ञाभिप्रेता । मन्ये, स वातव्यो, यस्मिन्नुते शाटक इत्येतद्भवति' इति । तस्मात् सूत्रं न कार्यम्[1] ।

## ८६. समुच्चये सामान्यवचनम्

**सूत्रार्थः** :- अनेकक्रियाध्याहारः समुच्चयः । समुच्चीयमानक्रियावाचनात् धातोः लोट् प्रत्ययो वा स्यात्, तस्य लोटः हिस्वमौ च । तध्वं भाविनस्तु वा भवतः ।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- तथा च सूत्रस्योदाहरणं भवति – अन्नं भक्षय, सक्तून् पिब, छन्दोऽधीष्व, व्याकरणमधीष्व । पक्षे तु क्रमात् अन्नं भक्षयति, सक्तून् पिबति, छन्दोधीते, व्याकरणमधीते इति । परन्त्विदं सूत्रं प्रत्याख्यातमाकरे "किमर्थमिदमुच्यते । अनुप्रयोगो यथा स्यात् । नैतदस्ति प्रयोजनम् । हिस्वान्तमनभिव्यक्तपदार्थकं

[1] भा.पु.स.३ पृ.स.२५३

तेनापरिसमाप्तोर्थः इति कृत्वा अनुप्रयोगी भविष्यति । इदं तर्हि प्रयोजनं सामान्यवचनस्येति वक्ष्यामि । एतदपि नास्ति प्रयोजनम् । सामान्यवचनस्यानुप्रयोगोऽस्तु विशेषवचनस्य वा इति सामानस्यानुप्रयोगो भविष्यति । लघुत्वात्" इति । अर्थात् – हिस्वप्रत्ययान्त लोडन्तशब्दात् अर्थाभिव्यक्तिः पूर्णा न भविष्यति । अतस्तस्मात् परिनिष्ठितार्थसम्पत्यर्थं धातोः अनुप्रयोगः अवश्यमेव भविष्यति । तत्र च सामान्यवाचिनः धातोरेव अनुप्रयोगः सिद्धो भवति लाघवात् । यतो हि सामान्यः विशेषस्यार्थं प्रतिपादयेत् किन्तु विशेषस्तु न सामान्यस्य ।ततः सामान्यस्यैव अनुप्रयोगः सिद्ध । सूत्रमिदं न कार्यम् ।

## ८७. उपसंवादाशङ्कयोश्च

**सूत्रार्थः :-** पणबन्धे आशङ्कायां च लोट् स्यात् ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** उपसंवादाशङ्कयोरर्थयोः धातुमात्रात् लेट्लकारः अनेन विधीयते । अहमेव पशूनामीशै इति उपसंवादस्योदाहरणम् । अर्थात् अहमेव पशुरूपसंसारिमनुष्याणां शासकः इति । नेज्जिह्मयन्तो नरकं पताम इति आशङ्कायाः । एतादृशकुटिलतामाचरन्तो खलु वयं नरकं पतामः इति । अत्र लिङर्थे लेट् इति सूत्रेण विकल्पेन लेट् प्राप्तः स इदानीमनेन नित्यं विधीयते । सूत्रमिदं प्रत्याख्यातम् । तथाहि – "उपसंवादाशङ्कयोर्वचनानर्थक्यं लिङर्थत्वात्

। उपसंवादाशङ्कयोर्व-चनमनर्थकम् । किं कारणम् । लिङर्थत्वात् । लिङर्थे लेट् इत्येव सिद्धम् । कः पुनः लिङर्थः । केचितु तदाहुः – हेतुहेतुमतोर्लिङिति । अपरे आहुः – वक्तव्य एवैतस्मिन् विशेषे लिङ् । प्रयुज्यते हि लोके – यदि मे भ वान् इदं कुर्यात् अहमपि ते इदं दद्याम्" इति । अर्थात् लिङर्थे लेट् इति सूत्रेणैव हेतुहेतुमद्भावादिषु लेट् सिद्धो भवति । उपसंवादाशङ्कयोरपि हेतुहेतुमद्भावोऽस्ति । यथा विद्यां चेत् पठेत् सुखं यायात् इति । तस्मात् सूत्रान्तरेणैवसिद्धे सूत्रमिदं प्रत्याख्येयम्[1] ।

## ८८. यथाविध्यनुप्रयोगः पूर्वस्मिन्

**सूत्रार्थः :-** आद्ये लिङ्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः । याहि याहि इति याति ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** अत्र पूर्वस्मिन् "क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः" इति सूत्रेण यस्याः प्रकृतेः लोट्प्राप्तः, तस्या एवानुप्रयोग इति सिध्यति । एवञ्च याहि याहि इति याति इति याधातोः एव पश्चात्प्रयोगः [अनुप्रयोगः] सिद्धः । निरुक्तं यत्प्रयोजनं तत्सूत्राभावेऽपि सिद्ध्यतीति कृत्वा सूत्रमिदं प्रत्याख्यातम् । तथाहि – हिस्वान्तं यदस्ति तेन च क्रियायाः परिसमाप्तिः नावगम्यते । तस्य हिस्वान्तस्य

[1] भा.पु.स.३ पृ.स.२५८

अपरिसमाप्तिः अर्थः इति कृत्वा तस्मात् तत्र अवश्यं यस्य धातोर्लोट् विहितः वर्तते तस्यैवानुप्रयोगो भवति । तस्मादिदं सूत्रं नारम्भणीयम् [1] ।

## ८९. वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्

**प.वि :-** वर्षप्रमाणे, ऊलोपः, च, अन्यतरस्याम् इति चतुष्पदं सूत्रम् ।

**समासः :-** वर्षस्य प्रमाणं वर्षप्रमाणम्, तस्मिन् वर्षप्रमाणे ।

**सूत्रार्थः :-** कर्मण्युपपदे पूरणेः णमुल्स्यात्, ऊकारलोपश्च वा समुदायेन वर्षप्रमाणे गम्ये । गोष्पदपूरं वृष्टो देवः । गोष्पदप्रं वृष्टो देव ।

**प्र.अ :-** ऊलोपश्चास्यान्यतरस्याम् इति प्रत्याख्यातम् ।

**प्र.क्र :-** पूरेः णमुलि ऊकारलोपे च प्रम् इति सिद्ध्यति । प्रकृतं सूत्रं विनापि प्रमिति रूपं साधयितुं शक्यते । प्रातः पूरणकर्मा । तस्मात् कः "आतोऽनुपसर्गे कः" इत्यनेन क्रियते । के प्रत्यये क्रियमाणे आकारलोपे क्रियाविशेषणत्वात् नपुंसकत्वे एकत्वे च सिद्धे प्रम् इति रूपम् । सूत्रं विनैवोपलभ्यत इति कृत्वा सूत्रेस्मिन् ऊलोपश्चास्यान्यतरस्यामितिग्रहणं नापेक्षितम् ।

**प्र.सू.स्व :-** वर्षप्रमाणे[2] ।

---

[1] भा.पु.स.३ पृ.स.२५७

[2] भा.पु.स.३ पृ.स.२६६

# चतुर्थाध्याये प्रत्याख्यातानि सूत्राणि

**प्रथमः पादः**

## ९०. ङ्याप्प्रातिपदिकात्

**सूत्रार्थः** :- ङ्यन्तादाबन्तात्प्रातिपदिकाच्च इत्यापञ्चमपरिसमाप्तेः अधिकारः।

**प्र.अ** :- ङ्याब्ग्रहणं प्रत्याख्यातम्।

**प्र.क** :- ङ्यन्तादाबन्तात्प्रातिपदिकाच्च इति आपञ्चमपरिसमाप्तेरधिकारः। तस्मात् सुबादयो भवन्तीति। अत्र च ङ्याप्ग्रहणं प्रत्याख्यातम् । यद्यप्यत्र ङ्यन्तादाबन्ताच्च सुबुत्पत्यर्थं ङ्याप्ग्रहणमिति वक्तुं शक्यम् । तथाहि – प्रातिपदिकादित्येतावदेव गृह्यते । एवं सति तद्धितोत्पत्त्यनन्तरमपि सुबुत्पत्तिप्रसङ्गः खल्विति नाशङ्कनीयम् । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति' परिभाषयैव सिद्धे ङ्यन्तादाबन्तादेव तद्धितोत्पत्तिः यथा स्यात् ङ्याब्भ्यां प्राङ्माभूदित्येदर्थं ङ्याब्ग्रहणामित्यपि नास्ति । "समर्थानां प्रथमाद्वा" इत्यत्र सुबन्तादेव तद्दितोत्पत्तेरुक्तत्वात् । तस्मात् स्त्रीलिङ्गे स्त्रीप्रत्ययोत्पत्तेः प्राक् सुपः प्रवृत्त्यभावात्, ततः प्राक् तद्धितस्य प्राप्तेरेवाभावत् तत्र दोषवारणाय सूत्रेऽस्मिन् ङ्याब्ग्रहणं न कार्यम्।

**प्र.सू.स्व** :- प्रातिपदिकात्[1]।

---

[1] भा.पु.स.४ पृ.स.१३

## ९१. डाबुभाभ्यामन्यतरस्याम्

**प्र.अ :-** उभाभ्यां ग्रहणं प्रत्याख्यातम्।

**प्र.क :-** उभाभ्यामिति ग्रहणं किमर्थमिति प्रश्ने – "मनः" "अनो बहुव्रीहेः"(४/१/१२) इति उभाभ्यां डाब् यथा स्यात् इत्येतदर्थं तावत् प्रकृतसूत्रे उभाभ्यां ग्रहणं कर्तव्यम् । अन्यथा अनो बहुव्रीहेः इत्यस्यैव अनुवृत्तिः स्यात् , मन्नन्तस्य डाबेव न स्यात् इति। यद्येतत् प्रयोजनं तर्हि न कर्तव्यम् अन्यतरस्यां ग्रहणम् । प्रयोजनस्य अन्यथा सिद्धत्वात् । द्वयोरपि मन्नन्तान्नन्तयोः स्वरितत्वं प्रतिज्ञायते इति कृत्वा तत्प्रतिज्ञाबलादुभयोरपि अनुवृत्तिः, अथवा तयोः अपेक्षणाच्च उभयरोपि प्राप्तिरिति उभाभ्यां ग्रहणं शक्यमकर्तुम्[1] ।

**प्र.सू.स्व :-** डाबन्यतरस्याम्।[2]

## ९२. अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि

**सूत्रार्थः :-** अपरिमाणान्तात् बिस्ताद्यन्ताच्च द्विगोर्ङीप्रस्यात् तद्धितलुकि सति ।

**प्र.अ :-** एकः प्रतिषेधः प्रत्याख्यायते ।

**प्र.क :-** सूत्रेऽस्मिन् द्वौ नञौ श्रूयेते । तत्र एको न वक्तव्यः । योगविभागेन इष्टसिद्धेः । परिमाणान्तात्तद्धितलुकि इत्येको योगः। परिमाणान्तादेव तद्धितलुकि सति ङीष् भवतीत्यर्थः । ततो बिस्ताचितकम्बल्येभ्यो न इत्यपरो योगः।

---

[1]भा.पु.स.४ पृ.स.३९

[2] भा.पु.स.४ पृ.स.३९

तद्धितलुकीत्यनुवर्तते । तस्मात् तद्धितलुकि सति बिस्ताचितकंबल्येभ्यो न ङीष् इति सिद्ध्यति । तस्मात् द्वौ नञौ न वक्तव्यौ।

**प्र.सू.स्व :-** परिमणान्तात्तद्धितलुकि । बिस्ताचितकम्बल्येभ्यो न ।[1]

## ९३. गोत्रावयवात्

**सूत्रार्थः :-** गोत्रावयवा गोत्राभिमताः कुलाख्याः, ततो गोत्रे विहितयोः अणिञोः स्त्रियां ष्यङादेशः स्यात् ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** "अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे" इत्यनेन उपोत्तमगुरुवर्णयोः प्रातिपदिकयोः विहितौ यौ अणिञौ तयोः स्त्रियां ष्यङ् भवतीत्युक्तम् । प्रकृते तावत् उपोत्तमगुरुवर्णकभिन्नस्यापि प्रातिपदिकस्य ष्यङर्थमिदं सूत्रमारभ्यते ।

अगुरूपोत्तमार्थमिति चेत् सर्वेषामवयवत्वात् सर्वत्र प्रवर्तेत । अष्टाशीति सहस्राणि ऊर्ध्वरेतसाम् ऋषीणां बभूवुः। तत्र अगस्त्यष्टमैः ऋषिभिः प्रजनोऽभ्युगतः । तत्र भवतां यदपत्यानि तानि गोत्राणि अतोऽन्ये गोत्रावयवाः । ततोऽपि उत्पत्तिः प्राप्नोति, तदनिष्टम्। तस्माद् नार्थोऽनेन योगेन ।

**प्र.सू.स्व :-** सम्पूर्णं सूत्रं प्रत्याख्यातम्।

---

[1] भा.पु.स.४ पृ.स.५४

## ९४. समर्थानां प्रथमाद्वा

**प्र.अ :-** प्रथमात्।

**प्र.क्र :-** सूत्रेऽस्मिन् प्रथमग्रहणं किमर्थमिति प्रश्ने सति प्रथमोच्चारिता या प्रकृतिः तत एव प्रत्ययो भवतु इत्येतदर्थमित्युक्तम्। अतः उपगोरपत्यम् इत्यत्र उपगोरिति षष्ठ्यन्तात् प्रत्ययो भवति। तस्मात् औपगवः इति सिध्यति। परं भष्यकारैः प्रथमग्रहणं प्रत्याख्यातमाकरे । **प्रथमग्रहणमनर्थकम् । न ह्यप्रथमेनार्थाभिधानात्** । सूत्रे अप्रथमोच्चारितात् अर्थाभिधानाभावात् प्रथमोच्चारितादेव प्रत्ययोत्पत्तेः प्रथमग्रहणमनर्थकमित्याशः । तथाहि तस्यापत्यम् इति सूत्रे अपत्यमिति अप्रथमोच्चारितात् प्रत्ययो माभूत् इति प्रथमग्रहणं कृतम् । अतः तस्य इति षष्ठ्यन्तात् प्रत्ययोत्पतौ औपगवः इत्यादि सिध्यति। इदञ्च प्रथमग्रहणं विनाऽपि साधयितुं शक्यम् । अनभिधानात्। यथा उपगुशब्दात् प्रत्ययोत्पत्तौ औपगव इत्यनेन अपत्यार्थः प्रतीयते, न तद्वत् अपत्यशब्दात् प्रत्यये कृते । एवञ्च द्वितीयेनाऽर्थाभिधानाभावात् ततः प्रत्ययस्य अप्रसक्त्या तद्वारणार्थं प्रथमग्रहणमपि न कर्तव्यमिति प्रथमग्रहणं प्रत्याख्यातमाकरे ।

**प्र.सू.स्व :-** समर्थानां वा ।

## ९५. ऐकागारिकट्चौरे

**सूत्रार्थः :-** चौरे वाच्ये निपात्यते ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र** :-एकागारं प्रयोजनमस्य इत्यर्थे एकागारशब्दात् इकट् प्रत्ययः, एवम् आदिवृद्धिश्च निपात्यते सूत्रेणानेन । तस्मात् ऐकागारम् इतिरूपं सिध्यति। एतदर्थं तावत् एतावान्न्यासो न कर्तव्यः । **एकागारान्निपातनानर्थक्यं ठञ् प्रकरणात्** ।[1] प्राग्वतेष्ठञ् इति अधिकारपतितत्वात् ठञ् प्रत्ययः प्राप्नोति । ठञि च इकादेशे , आदिवृद्धौ च ऐकागारिकः इति सिद्धे पुनः निपातनमनर्थकमिति कृत्वा सूत्रमिदं प्रत्याख्यातमाकरे ।

## ९६. फाण्टाहृतिमिमताभ्यां णफिञौ

**सूत्रार्थः** :- सौवीरेषु । फाण्टाहृतः, फाण्टाहृतायनिः । मैमतः, मैमतायनिः।

**प्र.अ** :- प्रत्ययस्थणित्करणम् ।

**प्र.क्र** :- फाण्टाहृतमिमतयोः शब्दयोः अपत्यम् इत्यर्थे अनेन सूत्रेण णफिञौ प्रत्ययौ विधीयेते । अत्र च यथासंख्यमनुदेशः समानाम् इति यथासंख्यमेव विवक्षितम्। तस्मात् फाण्टाहृतस्य अपत्यं फाण्टाहृतिः। अत इञ् इति इञ् प्रत्ययः भवति। तस्य फाण्टाहृतेः अपत्यं पुमान् इत्यर्थे फाण्टाहृति शब्दात् प्रकृतसूत्रेण णप्रत्यये फाण्टाहृतः इति रूपं सिध्यति। अत्र प्रत्यये यः णकारः पठितः सः व्यर्थः इति भाष्यकाराणामाशयः । तथाहि – **फाण्टाहृतेः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात् प्रातिपदिकस्य** ।[2]

---

[1] म भा पु IV पु सं 284

[2] म.भा.४ पृ.१४६।

फाण्टाहृतः इति रूपसम्पादनार्थं फाण्टाहृति इति शब्दस्वरूपात् यः "ण" प्रत्ययः कृतः, तत्र णकारोच्चारणं न कर्तव्यम् इत्याशयः। कुतः इति चेत् प्रातिपदिकस्यैव वृद्धत्वात्। तस्मात् फाण्टाहृतः इति यदिष्टं रूपं तत् णकारोच्चारणं विनापि सिध्यति। तस्मात् णकारोच्चरणं न कर्तव्यम् इत्याशयः । पुनस्तत्र प्रयोजनविषये आशङ्का कृता। फाण्टाहृताभार्यः इति रूपसम्पादनर्थं तावत् प्रत्यये णकारोच्चारणं कर्तव्यमेव इति। तथाहि, फाण्टाहृता भार्या यस्य सः इति विग्रहे पूर्वोत्तरपदयोः तुल्यप्रवृत्तिनिमित्तत्वात्, पूर्वपदस्य समानाधिकरणस्त्रीलिङ्गरूप-उत्तरपदपरकत्वात् च पुंवद्भावे फाण्टाहृतभार्यः इत्येव अनिष्टं रूपं स्यात्। अतः णकारः पठनीयः । णकारे पठिते तु फाण्टाहृता इति वृद्धेः हेतुः णप्रत्ययः इति कृत्वा तदन्तस्य स्त्रीवाचकस्य न वृद्धिः इति फाण्टाहृताभार्यः इति सिध्यति । तस्मात् प्रत्यये णकारोच्चारणं तावत् सार्थकमिति आशङ्कयां समाधत्ते, **उक्तं वा** इति वार्तिकेन। तस्य च अयमाशयः । गोत्रस्त्रियाः इति सूत्रे वार्तिके उक्तम् इत्यर्थः । तथाहि युवसंज्ञायां तावत् अस्त्रियाम् इति निषेधः कृतः इति कृत्वा, गोत्रसंज्ञायामेव पर्यवसानम् । गोत्रसंज्ञायां पर्यवसाने तावत् एको गोत्रे इति नियमात् इञन्तात् फाण्टाहृतशब्दात् अन्यस्य अपत्यप्रत्ययस्य असम्भवात् फाण्टाहृता इति शब्दः एव नास्ति इति कारणात् निरुक्तं प्रयोजनमपि अपास्तं भवति । तस्मात् फाण्टाहृतमिमताभ्यां अफिञौ इति विवक्षितम् इति आशयः ।

**प्र.सू.स्व** :- फाण्टाहृतमिमताभ्यामफिञौ ।

**द्वितीयः पादः**

## ९७. तेन रक्तं रागात्

**सूत्रार्थः** :- रज्यते अनेन इति रागः। काषायेण रक्तं वस्त्रं काषायम् ।

**प्र.अ** :- रागात् ।

**प्र.क** :- रज्यते वर्णान्तरं प्राप्यते इति रागः । रञ्जनसाधकं द्रव्यं इति यावत्। अथ च तेन रक्तं वर्णान्तरं प्राप्तम् इत्यस्मिन् अर्थे रागात् रञ्जनद्रव्यवाचकात् तृतीयान्तात् अण् प्रत्ययो भवतीति सूत्रार्थः । काषायेण रक्तं वस्त्रम् इत्यर्थे रञ्जनसाधकात् काषायेण इति तृतीयान्तात् अण् प्रत्यये सति काषायम् इति सिध्यति। अत्र च सूत्रे रागात् इति पदम् अनर्थकमिति प्रतिपादितं भाष्यकारैः । तथाहि – **रक्तादीनामर्थाभिधाने प्रत्ययविधानात् उपाध्यानर्थक्यम्** ॥ अत्र सूत्रे रागत् इति किमर्थमिति चेत् रञ्जनसाधकात् एव प्रत्ययो यथा स्यात् अन्यस्मात् माभूत् इत्येवमर्थम् । देवदत्तेन रक्तं वस्त्रम् इत्यत्र अण् प्रत्यये कृते दैवदत्तं वस्त्रम् इति रूपं सिध्यति । तच्च अनिष्टम्, अतः रागात् इति वक्तव्यमिति उक्ते समाधत्ते अनभिधानात् इति । अत्र देवदत्तेन रक्तं वस्त्रम् इति वाक्येन यः अर्थः प्रतीयते सः अर्थः तावत् दैवदत्तं वस्त्रम् इति वाक्येन तावत् नावगम्यते । तत्र लोके स्वस्वामिभावरूपस्यैव सम्बन्धस्य प्रतीयमानत्वात्। एवं लोके रक्तमित्यस्य यः अर्थः प्रसिद्धः तस्मिन्नर्थे एव प्रत्ययाः विधीयन्ते। अरागात् देवदत्तात् रक्तमित्यर्थः प्रत्ययेन अभिधातुमेव न शक्यते इति कृत्वा तद्वाव्यावृत्यर्थं रागादिति विशेषणमपि नापेक्षितमिति आशयः ।

**प्र.सू.स्व :-** तेन रक्तम्।

## ९८. पाण्डुकम्बलादिनिः

सूत्रार्थः :- तेन परिवृत इत्यर्थे पाण्डुकम्बलशब्दात् इनिः स्यात् ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** परिवृतो रथः इति सूत्रात् परिवृतो रथः इत्यनुवर्तमाने पाण्डुकम्बलेन परिवृतः इत्यर्थे इन् प्रत्ययो भवति इति सूत्रार्थः। तस्मात् पाण्डुकम्बली इति सिध्यति इत्येतत् मनसि निधाय सूत्रकारैः सूत्रं प्राणायि । परम् एतत् सूत्रं विनापि पाण्डुकम्बली इति रूपं संपादयितुं शक्यते इति कृत्वा सूत्रमिदं नापेक्षितमिति भाष्यकारैः सूत्रं प्रत्यख्यातम् । **अयं योगः शक्योऽकर्तुम्**[1] इत्यनेन भाष्यग्रन्थेन मत्वर्थीयेनैव इन् प्रत्ययेन पाण्डुकम्बलीति सम्पादयितुं शक्यमितिकृत्वा, यो रथः येन पाण्डुकम्बलेन समन्तात् वेष्टितः तत् पाण्डूकम्बलः तस्य रथस्य अस्तीत्येव व्यवहारः प्रसिद्धः । तस्मात् पाण्डुकम्बलः अस्य अस्तीत्यर्थे पाण्डुकम्बलशब्दात् अत इनिठनौ इति सूत्रात् इन् प्रत्यये सति पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिनः इति सिध्यतीति कृत्वा तदर्थं पुनर्योगः नारम्भणीयः । अत्र च विषये अनेके अणं बाधितुम् इन् प्रत्ययस्य पुनर्विधानमपेक्षितम् । तस्मात् सूत्रं सफलमेवेति प्रतिपादयन्ति । सूत्रे कृते तु परिवृतो रथः इत्यनेन विधीयमानस्य उत्सर्गस्य अणः बाधो भवति । तस्मात् पाण्डुकम्बलः इति अनिष्टं रूपं वारितं

---

[1] म.भा.

भवति । अतः सूत्रमपेक्षितं खल्विति चेत् पाण्डुकम्बली इति इन्नन्तेन समत्वात् वेष्टितरूपः अर्थः यथा अभिधीयते तद्वत् अण्णन्तस्य पाण्डुकम्बलशब्दस्य तादृशार्थाभिधाने शक्त्यभावात् उत्सर्गोऽपि अण् तत्र न प्रवर्तते । तस्मात् इन् एव प्रसक्तः । स च इन् अन्यथैव सिद्धः इति कृत्वा सूत्रमिदं नारम्भणीयम् इति सिद्धम्।

## ९९. अनुब्राह्मणादिनिः

**सूत्रार्थः** :- तदधीते तद्वेद इति विषये अनुब्राह्मणशब्दात् इन् प्रत्ययो भवति।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- तदधीते तद्वेद इति विषये अनुब्राह्मणशब्दात् इन् प्रत्ययो भवति इति सूत्रार्थः । ब्राह्मणसदृशः ग्रन्थः अनुब्रह्मणम् । तादृशं ब्राह्मणसदृशम् अनुब्राह्मणं ग्रन्थम् अधीते इत्यर्थे प्रकृतसूत्रेण इन् प्रत्यये कृते अनुब्राह्मणी, अनुब्राह्मणिनौ, अनुब्राह्मणिनः इति सिध्यति । अतः सूत्रकारैः सूत्रं प्रणीतम् । परन्तु मत्वर्थीयेनैव इनिना इदम् इष्टं रूपं सम्पादयितुं शक्यते इति कृत्वा पुनरयं योगो नारम्भणीयः इति भाश्यकाराणामाशयः । **अयं योगः शक्योऽकर्तुम् ।**[1] इत्यनेन भाष्यग्रन्थेन । अत्र च मत्वर्थीयेनैव इन् प्रत्ययेन रूपं सम्पाद्यते इति उक्तम्। तच्च कथम् इति प्रश्ने सति प्रतिपादयति । यस्तावत् अनुब्राह्मणमधीते तस्य तदस्तीति प्रतीत्यैव अनुब्राह्मणमस्यास्तीत्यर्थे इनिप्रत्ययः सिध्यति। तस्मात् अनुब्राह्मणी, अनुब्राह्मणिनौ, अनुब्राह्मणिनः इति सिध्यति । अतः पृथक् सूत्रं नारम्भणीयमिति

---

[1] म.भा.पु.IV पृ. सं-१७६।

आशयः । तथा सति अनुब्राह्मणशब्दात् अदन्तात् इनिः यथा उत्पाद्यते तद्वत् ठनोऽपि उत्पत्तिः स्यात्। अथ च अत इनिठनौ इत्यस्यापवादः तदधीते तद्वेद इति अण् अपि स्यात्। अतः तद्वारणार्थं वा सूत्रमारम्भणीयमेव खल्विति चेत् । अणि सति आनुब्राह्मणः इति च रूपं स्यात् । परन्तु तयोः शब्दयोः ब्राह्मणसदृशग्रन्थाध्येतृबोधने शक्त्यभावात् तयोरत्र न प्रसक्तिः। प्रसक्तिश्च इनः एव । स च अन्यथैव सिद्धः। अतः सूत्रमिदं नारम्भणीयमिति आशय ।

## १००. कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु

**सूत्रार्थः** :- कुलकुक्षिग्रीवाशब्देभ्यः श्वा-असि-अलङ्कारेषु अर्थेषु गम्यमानेषु ढकञ्।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क्र** :- कुलकुक्षिग्रीवाशब्देभ्यः श्वा-असि-अलङ्कारेषु अर्थेषु गम्यमानेषु कत्र्यादिभ्यो ढकञ् इति सूत्रेण अनुवर्तमानो ढकञ् प्रत्ययः भवतीति सूत्रार्थः । कुलशब्दस्य श्वाभिधेयकत्वे कुलशब्दात् ढकञि, ढस्य एयादेशे च कौलेयकः इति रूपं सिध्यति । यदा कुक्षिशब्दस्य अस्याभिधायकत्वं तदा तस्य ढकञि, ढस्य एयादेशे कौक्षेयकः इति सिध्यति। यदा तु ग्रीवा शब्दस्य अलङ्कारार्थाभिधायकत्वं तदा ग्रीवाशब्दात् ढकञि ग्रैवेयकः इति सिध्यति इति सूत्रस्य प्रयोजनम्। परन्तु इमानि त्रीणि पदानि एतत् सूत्रं विनाऽपि साधयितुं शक्यन्ते इति कृत्वा इदं सूत्रं

प्रत्याख्यातमाकरे। तथा हि- **अयं योगः शक्योऽवक्तुम्।**[1] कथमिति चेत् कुलात्खः इति सूत्रात् कुलात् इत्यनुवर्तमाने अपूर्वपदादन्यतरस्यां यड्ढकञौ इति सूत्रात् ढकञ् प्रत्ययो भवति । तस्मात्, ढस्य एयादेशे ञित्वादादिवृद्धौ च कौलेयकः इति सिध्यति । तस्मात् कौलेयकः इति सम्पादनार्थं सूत्रे कुलशब्दः न पठनीयः। एवं श्वा इति अर्थनिर्देशश्च न कर्तव्यः । तर्हि कुक्षिग्रीवाभ्याम् अस्यलङ्कारयोः इति वक्तव्यमेव खलु अन्यथा कौक्षेयकः ग्रैवेयकः इति न सिध्यतीति आशङ्कायां तयोरपि सिद्धिं प्रदर्शयन्ति ।

कुक्षिग्रीवात्तु कन्-ढञौ इति । कुक्षिशब्दात् ग्रीवाशब्दाच्च ढञि कौक्षेयः ग्रैवेयः इति सिध्यति। ततः कनि कौक्षेयकः, ग्रैवेयकः इति च सिध्यति। तर्हि ढञ् कन् च प्रत्ययौ काभ्यां सूत्राभ्यां प्राप्नुतः इति जिज्ञासायाम्। तत्र भवः इत्यर्थे दृति, कुक्षि, कलशि, वस्ति, अस्ति, वहि एतेभ्यः शब्देभ्यः सप्तम्यन्तेभ्यः ढञ् प्रत्ययो भवति इत्यर्थकेन दृतिकुक्षिकलशिवस्त्यस्त्यहेः ढञ् इति सूत्रेण कुक्षिशब्दात् ढञि कौलेयः इत्यस्मात् संज्ञायां कन् इति कनि च कौक्षेयकः इति सिध्यति । ग्रैवेयकः इति तु दृतिकुक्षि इत्यादि सूत्रात् ढञिति अनुवर्तमाने ग्रीवाभ्योऽण् च इति सूत्रात् ढञि ग्रैवेय इति, ततः संज्ञायां कन् इति कनि च ग्रैवेयकः इति सिध्यति । तस्मात् प्रकृतं सूत्रं नापेक्षितमिति प्रत्याख्यातमाकरे ।

[1] म.भा.पु.IV.पृ.सं१८५।

## १०१. रङ्कोरमनुष्येण्च

**सूत्रार्थः** :- रङ्कुशब्दात् अमनुष्ये अर्थे अण् ष्फक् च

**प्र.अ** :- अमनुष्यग्रहणं प्रत्याख्यातम्।

**प्र.क** : कापिश्याः ष्फक् इति सूत्रात् फक् इत्यनुवर्तमाने रङ्कुशब्दात् अमनुष्ये अर्थे अण् ष्फक् च भवति इत्युक्तत्वात् रङ्कुप्रदेशे भवो गौः राङ्कवः इति सिद्धम्। तस्य च गोः मनुष्यभिन्नत्वात् प्रत्ययोत्पत्तिः। अमनुष्ये इति किमर्थं वक्तव्यम् इति चेत् मनुष्यभिन्नत्वादेव यथा स्यात् मनुष्यात् माभूत् इत्येतदर्थम्। अतः राङ्कवको मनुष्यः इत्येव। न तु राङ्कवो मनुष्यः इति।

अत्र च अमनुष्यग्रहणं प्रत्याख्यातमाकरो **रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोः वुञ् विधानात्।** [1] इत्यनेन भाष्यग्रन्थेन। तथाहि मनुष्ये, मनुष्यस्थे च जातादौ प्रत्यार्थे कच्छादिभ्यो वुञ् भवति इत्येर्थकेन मनुष्यतत्स्थयोः वुञ् इति सूत्रेणात्र वुञ् प्राप्नोति। तर्हि रङ्कुप्रदेशे भवो मनुष्यः इत्यर्थे प्रकृतसूत्रे अमनुष्यग्रहणाभावे, प्रकृतसूत्रेण अण् प्रत्ययः, मनुष्यविषयत्वात् मनुष्यतत्स्थयोः इति वुञ् अपि, किमत्र कर्तव्यमिति चेत् परत्वात् अपवादत्वात् वुञ् एव प्रसक्तः इति कृत्वा अप्रसक्तस्य अनः व्यावृत्यर्थं सूत्रे अमनुष्यग्रहणं न कर्तव्यमिति आशयः।

एवं सूत्रे अण् ग्रहणमपि न कर्तव्यम्। कुत इति चेत् रङ्कुशब्दस्य कच्छादिगणे पाठात् कोपधादण् इत्यतः अण् इत्यनुवर्तमाने कच्छादिभ्यश्च इति सूत्रेण

---

[1] म भा पुV पु सं 186

रङ्कुशब्दादपि अण् सिध्यति। तस्मात् सूत्रे अण् ग्रहणमपि प्रत्याख्यातमाकरे। एवं रङ्कुश्च इत्येतावदेव सूत्रं विवक्षितम् इति सिद्धम्।

## तृतीयः पादः

### १०२. सर्वात्राण्च तलोपश्च

**सूत्रार्थः :-** हेमन्तादण् स्यात् तलोपश्च लोके वेदे च। हेमन्तशब्दादणि हैमन्तम्। हेमन्तशब्दस्य तलोपे हैमनम् इति। हेमन्तशब्दात् "हैमन्ताच" इति सूत्रेण ठञि हैमन्तिकमिति च सिध्यति।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम्।

**प्र.क :-** अनेन सूत्रेण हेमन्तशब्दात् अणि हैमन्तम्, तलोपे हैमनम्, इति रूपञ्च व्युत्पादितम्। तलोपवचनमनर्थकं हेमन्तशब्दात् हेमन्शब्दस्य भिन्नस्य वर्तमानत्वात्। ततश्च हेमन्तशब्दात् अणं कृत्वा तलोपेन हैमनमिति शब्दो न व्युत्पाद्यः।

अथवा समग्रसूत्रमेव प्रत्याख्यायते। तथाहि – वेदे तावत् हैमन्तिकं, हैमन्तं, हैमनमिति रूपत्रयमिष्टम्। तच्चान्तरेणापि सूत्रं संसाध्यते। तद्यथा – हेमन् इति शब्दान्तरस्य "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" इति ऋत्वणि हैमनमिति सिद्धम्। हेमन्तशब्दात् "हैमन्ताच" इति ठञि हैमन्तिकम्। हेमन् - शब्दात् यथा ऋत्वण् कृतः तद्वत् सर्वे विधयः छन्दसि विकल्प्यन्त इत्यतो हेमन्तशब्दादपि

ऋत्वण्। ततश्च हैमन्तम् इति वैदिकं रूपत्रयमपि सिद्धम्। तस्मादिदं वैदिकरूपसाधनार्थत्वेन तु निष्प्रयोजकम्।

अथ च भाषायां हेमन् इति शब्दान्तरस्यैवं हेमन्त इतिशब्दस्य च ऋत्वणि हैमनं हैमन्तम् इति च रूपे सिद्धे। तस्मात् लोकेऽपि रूपसिद्ध्यर्थत्वेनेदं नारम्भणीयम्। एवञ्च प्रयोजानाभावं मनसिकृत्य सूत्रमिदं प्रत्याख्यातमाकरे ।[1]

### १०३. प्रायभवः

**सूत्रार्थः :-** समर्थात् सप्तम्यन्तात् तत्र इत्यर्थे प्रायभवः इति विषये यथाययं विहिताः प्रत्ययाः ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** समर्थात् सप्तम्यन्तात् तत्र इत्यर्थे प्रायभवः इति विषये यथाययं विहिताः प्रत्ययाः भवन्ति इति हि सूत्रार्थः सिद्धः। अयं च प्रायशब्दः साफल्यस्य किञ्चित् न्यूनतां वदति । तस्मात् स्रुघ्ने प्रायेण भवः इत्यर्थे अण् प्रत्यये स्रौघ्नो देवदत्तः इति रूपं सिद्ध्यति । अत्र च सूत्रे प्रायभवः इति ग्रहणं प्रत्याख्यातामाकारे । तथाहि – **प्रायभवग्रहणमनर्थकं तत्र भवेन कृतत्वात् ।**[2] यत् रूपं प्रायभवः इति सूत्रेण साधनीयं वर्तते, तदेव रूपं तत्रभवः इत्यनेन साध्यते । कथमपि योऽहि मनुष्यः कस्मिंश्चित् प्रदेशे प्रायेण भवति इत्युक्तौ तत्र भवति इत्येवार्थः । तस्मात् प्रायेण

---

[1] भा.पु.स.४ पृ.स.१९९

[2] म भा पु II पु सं 207

स्त्रुघ्ने भवन् कश्चित् मनुष्यः स्त्रुघ्ने भवः इति व्यवहारविषयो भवति । तस्मात् तत्रभवः इत्यनेनैव सूत्रेण प्रयोजनस्य अन्यथासिद्धत्वात् सूत्रं नारम्भणियंम् इति उक्ते पुनराशङ्कोपतिष्ठते । तत्र भवो नाम नित्यं तत्र भवः । प्रायभवो नाम अनित्येन तत्र भवः इत्येवं सत्ताय़ाम् नित्यानित्यविषयभेदात् अनित्येन भवति इत्यर्थः नित्येन भवति इत्यनेन गतार्थो न भवति । तस्मात् सूत्रमपेक्षितमेव इति चेत् न । तयोर्मध्ये न कोऽपि भेदोऽस्ति । कथमिति चेत् - तत्र भवः इत्यधिकारे जिह्वामूलाङ्गुलेश्छः इति सूत्रेण जिह्वामूले भवः वर्णः इत्यर्थे छप्रत्यये जिह्वामूलीयः इति रूपं संपाद्यते । यदि तत्र भवः इत्यस्य नित्येन तत्र भवः इत्यर्थः स्यात् तर्हि जिह्वामूले वर्णस्य नित्यं भवत्वाभावात् छप्रत्यय एव न स्यात् । एवं सुघ्ने भवः इत्यर्थे तत्र भवः इत्यनेन अण् प्रत्यये स्त्रौघ्नः इति च रूपं संपाद्यते । यद्यपि स्त्रौघ्ने सदा भवति देवदत्तः तथापि उदकादिदेशमप्यवश्यं गच्छति । तस्मादुभयोरपि समानार्थत्वात् प्रायभवस्य प्रयोजनं तत्र भवेन कृतमिति कृत्वा पुनः प्रायभवस्य अनपेक्षितत्वात् तत् सूत्रं प्रत्याख्यातमाकरे ।

## १०४. अव्ययीभावाच्च

**सूत्रार्थः :-** अव्ययीभावसमासादपि ञ्यप्रत्ययो भवति इत्यर्थः ।

**प्र.अ :-** अव्ययीभावात् च ।

**प्र.क्र :-** परिमुखमिति अव्ययीभावात् भवाऽर्थे अनेन सूत्रेण ञ्यप्रत्यये कृते पारिमुख्यमिति सिध्यति । अत्र जिज्ञासा , किं सर्वेभ्यः अव्ययीभावेभ्यः अयं

प्रत्ययो भवतीति उत नेति। तत्रोक्तं परिमुखादिभ्य एवाऽयं प्रत्ययो भवति , न सर्वेभ्यः इति । तस्मात् उपकूलादिभ्यः नाऽयं प्रत्ययः । इदञ्च सूत्रं प्रत्याख्यातमाकरे । **ञ्यप्रकरणे परिमुखादिभ्य उपसङ्ख्यानम् ।**[1] गम्भीराञ्ञ्यः इति ञ्यप्रत्ययप्रकरणे परिमुखादिभ्य उपसंङ्ख्यानमिति वचनमेवारम्भणीयम् । सूत्रस्य अतिव्यपकत्वात् । यदीदं सूत्रमारभ्येत तर्हि उपकूलादिभ्योऽपि प्रत्ययः स्यात् । अतः प्रतिषेधः आरम्भणीयः इत्यापतति । तदपेक्षया सूत्रप्रत्याख्यानमेव वरमिति मत्वा इदं सूत्रं प्रत्याख्यातमाकरे ।

## १०५. फले लुक्

**सूत्रार्थः :-** विकाराऽर्थे ,अवयवाऽर्थे च उत्पन्नस्य प्रत्ययस्य फले विषये लुक्श् ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क्र :-** विकाराऽर्थे ,अवयवाऽर्थे च उत्पन्नस्य प्रत्ययस्य फले विषये लुग्भवतीति सूत्रार्थः वर्णितः । यथा आमलक्याः विकारः अवयवू वा आमलकं फलम् । अत्र नित्यं वृद्धशरादिभ्यः इति प्राप्तो मयट् अनेन लुका अपह्रियते । तस्मात् आमलकम् ?त्येव सिध्यति । इदञ्च सूत्रं भाष्ये प्रत्याख्यातम् । **फले लुग्वचनमनर्थकं प्रकृत्यन्तरत्वात् ।** [2] फले विद्यमानः आमलकशब्दः प्रकृत्यन्तरमेव । तस्मात् आमलकी इति वृक्षवाचकात् विकारार्थे, अवयवार्थे वा

---

[1] म भा पु IV पु सं 285

[2] म भा पु IV पु सं 229

प्रत्ययं कृत्वा ततो लुकञ्च कृत्वा आमलकशब्दो नोत्पाद्यः। तस्मात् सूत्रमिदं प्रत्याख्यातमाकरे ।

**चतुर्थः पादः**

## १०६. चूर्णादिनिः

**सूत्रार्थः :-** चूर्णशब्दात् संस्त्रष्टे अर्थे गम्यमाने इनिः स्यात् ।

**प्र.अ :-** सम्पूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** चूर्णशब्दात् संस्त्रष्टे अर्थे गम्यमाने इनिः इति प्रत्ययो भवतीति उक्तत्वात्, चूर्णेन संस्त्रष्टाः चूर्णिनः अपूपाः इति सिद्ध्यति । चूर्णी, चूर्णिनौ, चूर्णिनः। इदं सूत्रं भाष्यकारैः प्रत्याख्यातम्। **अयं योगः शक्यो वक्तुम्** ।[1] इत्यनेन भाष्येण। कथमिति चेत् येन यत् संस्त्रष्टं तत् तस्यास्तीति प्रतित्या। तथाहि चूर्णेन संस्त्रष्टाः ये अपूर्वाः तेषां अपूपानां चूर्णम् अवश्यमस्ति, तस्मात् चूर्णम् अस्य अपूपस्य अस्ति इत्यर्थे अत इनि ठनाविति इनि प्रत्यये सिद्धे, चूर्णी, चूर्णिनौ, चूर्णिनः इति सिद्ध्यति तस्मात् सूत्रं नारम्भणीयम् इत्याशयः ।

---

[1] म भा पु IV पु सं 232

## १०७. लवणाल्लुक्

**सूत्रार्थः** :- लवणशब्दात् संसृष्टार्थे विहितस्य ठकः लुक्स्यात् ।

**प्र.अ** :- संपूर्ण सूत्रं प्रत्याख्यातम् ।

**प्र.क्र** :- लवणशब्दात् संसृष्टार्थे प्रवृत्तं ठकमुद्दिश्य लुग्विधानार्थं सूत्रमिदमारब्धम्। परं भाष्यकारैः प्रत्याख्यातं च । **लवणाल्लुग्वचनानर्थक्यं रसवाचित्वात्** ।[1] लवणशब्दस्तावत् रसवाचीति कृत्वा सूत्रमिदं नारम्भणीयमित्याशयः । लवणशब्दस्य रसवाचित्वे, सूत्रस्यास्य प्रत्याख्याने च कस्सम्बन्धः इति चेत्, संसृष्टे इत्यधिकारे लवणशब्दात् प्रत्ययविधानम् । संसृष्टिश्च द्रव्येण द्रव्यस्य भवतीति कृत्वा रसवाचिनो लवणशब्दस्य प्रत्ययाप्रसक्त्या लुग्वचनं नारम्भणीयमित्याशः ।

---

[1] म भा पु IVपु सं 233

# पञ्चमाध्याये प्रत्याख्यातानि सूत्राणि

**प्रथमः पादः**

### १०८. कम्बलाच्च संज्ञायाम्

**सूत्रार्थः** :- कम्बलशब्दात् यत् स्यात् संज्ञायां गम्यमानाया ।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- प्रकृतसूत्रेण संज्ञायां गम्यमानायां कम्बलशब्दात् यत् विधीयते । एवञ्च कम्बल्यमिति सिद्ध्यति । कम्बल्यन्नाम ऊर्णाफलशतस्य नामधेयम्। ऋतेऽपि सूत्रं कम्बल्यशब्दः सिद्धो भवति निपातेन । कथं निपातनमिति चेत् – "अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि" इति । तस्मात्सूत्रं नारम्भणीयम् ।

संज्ञायामेव यत्यथा स्यात् अन्यत्र माभूदित्येतदर्थं सूत्रमारम्भणीयमिति नाशङ्कनीयम् । यतो हि अपरिमाण इति पर्युदासे कृते कम्बल्यशब्दस्य ङीप्निषेधार्थं पुनः स्वीकाराज्ज्ञापकात् । यद्यत्र कम्बल्यशब्दः संज्ञावाचको न स्यात् तर्हि संज्ञावाचिनः परिमाणवाचिनः क्रियामाणो ङीब्निषेधः असंज्ञावाचिनः कम्बल्यशब्दस्य न प्राप्नोति । तस्मात् निषेधपूर्वकप्राप्तिदर्शनार्थं कम्बल्यशब्दपाठः व्यर्थः । स व्यर्थः सन् ज्ञापयति संज्ञावाच्येवेति । तस्मात्सूत्रमिदं नारम्भणियम् ।[1]

---

[1] भा.पु.स.४ पृ.स.२४५

## १०९. तदस्य तदस्मिन् स्यादिति

**सूत्रार्थः** :- तदस्य स्यादिति, तदस्मिन् स्यादिति, च अर्थे यथायथं प्रत्ययाः स्युः ।

**प्र.अ** :- स्यात् ग्रहणम् ।

**प्र.क** :- तदस्य स्यात्, तदस्मिन् स्यात् इति च अर्थे यथाविहितं प्रत्ययाः भवन्ति इति अर्थः । प्राकारः आसामिष्टकानां स्यादित्यर्थे प्राकारशब्दात् छप्रत्यये प्राकारीयः इति सिध्यति । यद्येवं तर्हि प्रकारो देवदत्तस्य स्यात् इत्यत्रापि छप्रत्ययः स्यात् । अतस्तन्माभूदित्येतदर्थं इति शब्दः सूत्रे पठितः । स च लौकिकीं विवक्षां द्योतयति । लोके तथा विवक्षाया अभावात् , ततः प्रत्ययो न भवतीति ।अतः इति शब्दः सूत्रे पठितः । अत्र सूत्रे स्याद्ग्रहणं तावत् सम्भावनायाम् । तस्मात् प्रायेण अस्मिन्देशे प्राकारः स्यात् इत्यर्थे प्रत्ययो भवति । एवञ्च स्याद्ग्रहणं प्रायस्य सम्प्रत्ययार्थम्।तथा सति देवदत्तस्य, देवदत्ते वा प्राकारः स्यात् इति प्रायस्य सम्प्रत्ययाभावात् ततः प्रत्ययो नोत्पद्यते । इदमेव प्रयोजनम् सूत्रस्थ इति ग्रहणेन सम्पादितमिति कृत्वा, तेनैव स्याद्ग्रहणप्रयोजनस्य गतार्थत्वात् स्याद्ग्रहणं प्रत्याख्यातमाकरे । **यद्येवं नार्थो स्याद्ग्रहणेन** ।[1]

**प्र.सू.स्व** :- तदस्य तदस्मिन् इति।

## ११०. अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्

**सूत्रार्थः** :- अध्यर्धपूर्वात्, द्विगोश्च परस्य आर्हीयस्य लुक्स्यात् ।

---

[1] म भा पु IV पु सं 253

**प्र.अ :-** अध्यर्धपूर्व, असंज्ञायाम् ।

**प्र.क :-** अत्र च सूत्रे अध्यर्धपूर्वग्रहणम् एवम् असंज्ञायामिति च प्रत्याख्यातमाकरे । तथाहि । **उक्तं संज्ञात्वे प्रयोजनम् । तस्मादिह अध्यर्धग्रहणं न कर्तव्यम् ।**[1] समासकन्विध्यर्थत्वं तावत् अध्यर्धग्रहणस्य बहुगणवतुडति सङ्ख्या इति सूत्रे प्रतिपादितम् । एवं लुकि चाग्रहणमित्यपि प्रतिपादितमिति कृत्वा प्रकृते लुगर्थं तावत् अध्यर्धग्रहणं न कर्तव्यम् । तस्मात् प्रत्याख्यातमाकरे । तदभावे च तद्विशेषणं पूर्वग्रहणामपि नापेक्षितम् । एवम् असंज्ञायामित्यपि प्रत्याख्यातमाकरे । अनर्थकत्वात् । संज्ञायामवगम्यमानायां तद्धितस्य लुङ्माभूदित्येतदर्थमत्र असंज्ञायामिति पठ्यते । परन्तु संज्ञां विना कस्यचित् लुगेव न भवतीति कृत्वा प्रतिषेधोऽनर्थकः । **सङ्ज्ञाप्रतिषेधानर्थक्यञ्च । तन्निमित्तत्वात् लोपस्य ।** [2]

**प्र.सू.स्व :-** द्विगोर्लुक् ।

## १११. कुलिजाल्लुक्खौ च

**सूत्रार्थः :-** कुल्जान्तात्द्विगोः सम्भवत्यादिष्वर्थेषु लुक्खौ वा स्तः ।

**प्र.अ :-** लुक्खौ ।

**प्र.क :-** प्रकृतसूत्रं प्रति ष्ठन्,ष्ठञ्, इति द्वयमनुवर्तते । ख एवं लुगनेनैव विधीयेते । ततः ष्ठनि द्विकुलजिकी, ष्ठञि द्वैकुलजिकी, खे द्विकुलजीना, लुकि च द्विकुलजा

---

[1] म भा पु IV पु सं 264

[2] म भा पु IV पु सं 263

इति च रूपं सिध्यति । अत्र सूत्रे लुक्खग्रहणं प्रत्याख्यातमाकरे । **कुलिजाच्चेति सिद्धे लुक्खग्रहणानर्थक्यं पूर्वस्मिन् त्रिकभावात् ।**[1] कुलिजाच्च इति सूत्रे क्रियमाणे अपि निरुक्तानि रूपाणि साधयितुं शक्यानि । एवं न्यासे पूर्वतः खोऽन्यतरस्यामिति अनुवृत्तौ द्विकुलजीना, द्विकुलजा, ष्ठनि द्विकुलजिकी, लुगभावे उत्सर्गः ष्ठञ् तु न भवति । अनभिधानात् । तस्मात् त्रिकमेवेष्टम् । तच्च कुलिजाच्च इत्येतावतैव सिद्धमिति कृत्वा लुक्खग्रहणं प्रत्याख्यातमाकरे ।

**प्र.सू.स्व :-** कुलिजाच्च ।

## ११२. छेदादिभ्यो नित्यम्

**सूत्रार्थः :-** नित्यम् आभीक्ष्ण्यम् । छिन्नप्ररूढत्वात् छेदं नित्यम् अर्हतीति छैदिको वेतसः ।

**प्र.अ :-** नित्यम् ।

**प्र.क्र :- छेदादिभ्यो विग्रहदर्शनात् नित्यग्रहणानर्थक्यम् ।**[2] नित्यं छेदमर्हतीति वाक्यस्यापि लोके दर्शनात् नित्यग्रहणं व्यर्थमेव । तस्मात् प्रत्ययविशेषणार्थं तावत् नित्यग्रहणं न कर्तव्यम् । अयमेव प्रत्ययो यथा स्यात् , अन्यो माभूदित्येतदर्थमित्यपि वक्तुं न शक्यते । अन्यस्य प्राप्तेरेवाभावात् । तस्मात् सूत्रेऽस्मिन् नित्यग्रहणं प्रत्याख्यातमाकरे ।

---

[1] म भा पु V पु सं 268

[2] म भा पु V पु सं 277

**प्र.सू.स्व :-** छेदादिभ्यः ।

## ११३. पन्थो ण नित्यम्

**सूत्रार्थः :-** नित्यं गच्छतीत्यर्थे णः । पन्थानं नित्यं गच्छति, पान्थः ।

**प्र.अ :-** नित्यम् ।

**प्र.क :-** लोके, पन्थानं गच्छतीति वाक्यस्यापि दर्शनात् नित्यग्रहणं न कर्तव्यम् । तस्मात् प्रत्ययविशेषणार्थं तावत् न नित्यग्रहणम् । अयमेव प्रत्ययो यथा स्यात्, अन्यो माभूदित्येतदर्थमित्यपि वक्तुं न शक्यते । अन्यस्य प्राप्तेरेवाभावात् । तस्मात् सूत्रेऽस्मिन् नित्यग्रहणं प्रत्याख्यातमाकरे ।

**प्र.सू.स्व :-** पन्थो ण ।

## ११४. आकालिकडाद्यन्तवचने

**सूत्रार्थः :-** निपात्यते। समानकालौ आद्यन्तौ यस्य सः आकालिकः ।

**प्र.अ :-** इकट् ।

**प्र.क :-** सूत्रेणानेन समानकालौ आद्यन्तौ यस्य इति विग्रहे समानकालशब्दस्य आकालशब्दादेशः एवम् इकट् प्रत्ययश्च निपात्यते । तस्मात् आकालिकः इति रूपं सिध्यति । एतदर्थं तावत् निपातनं नारम्भणीयमिति निपतनं प्रत्याख्यातमाकरे । **आकालात् निपातनानर्थक्यं ठञ् प्रकरणात् ।** [1]

[1] म भा पु IV पु सं 285

आकालशब्दस्तावत् ठञ् प्रकरणे पठनीयः । ततो ठञि तस्य इकादेशे च रूपस्य सिद्धत्वात् । तस्मात् इकट् इति निपातनं प्रत्याख्यातमाकरे ।

**प्र.सू.स्व :-** आकालाद्यन्तवचने ।

**११५. न नञ्पूर्वात् तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरस-लसेभ्यः**

**सूत्रार्थः :-** इतः परं ये भावप्रत्ययाः नञ्तत्पुरुषात् नस्यूः, चतुरादीन् वर्जयित्वा ।

**प्र.अ :-** समग्रं सूत्रम् ।

**प्र.क्र :-** नञ् तत्पुराषात् त्वतलोर्निषेधार्थमिदं सूत्रमारब्धम् । परन्तु तस्मादपि त्वतलोरिष्टत्वात् निषेधोऽयं प्रत्याख्यातो भाष्ये ।

**द्वितीयः पादः**

**११६. तावतिथं ग्रहणमिति लुग्वा**

**सूत्रार्थः :-** तृतीयान्तात् पूरणप्रत्ययान्तात् ग्रणमित्यर्थे कन्स्यात्, पूरणप्रत्ययस्य लुग्वा ।

**प्र.अ :-** लुग्वा ।

**प्र.क्र :-** द्वितीयेन रूपेण ग्रहणमित्यर्थे द्वितीयशब्दात् कन् प्रत्यये द्वितीयकम् एवं लुकि च द्विकम् इति च रूपं सिध्यति इति सूत्रस्यास्य प्रयोजनमुक्तम् । तच्च लुग्वा इति ग्रहणं विनापि साधयितुं शक्यत्त्वात् लुग्वा इति ग्रहणं प्रत्याख्यातमाकरे ।

**तावतिथं ग्रहणमिति लुग्वावचनानर्थक्यं विभाषाप्रकरणात् ।**[1] लुग्वचनञ्च रूपद्वयसंपादनार्थम् । तच्च विभाषाप्रकरणादेव सिद्धम्।तस्मात् लुग्वाग्रहणं प्रत्याख्यातम् ।

**प्र.सू.स्व :-** तावतिथं ग्रहणमिति ।

## ११७. रसादिभ्यश्च

**सूत्रार्थः :-** उक्तविषये एतेभ्योऽपि मतुप् । रसवान् । रूपवान् ।

**प्र.अ :-** रसादिभ्यश्च ।

**प्र.क :-** एतद्गणे पठितानां शब्दानां तावत् तदस्यास्मिन्नित्यादि सूत्रेणैव मतुपो सिद्धत्वात् इदं सूत्रं किमर्थमिति चेत् अन्येषां मतुबर्थकप्रत्ययानां बधनार्थमित्युक्तम् । तच्च न । **नैतदस्ति प्रयोजनम् । दृश्यन्ते हि अन्ये रसादिभ्यो मत्वर्थीयाः ।** एवञ्च अन्येषामपि मत्वर्थीयानां प्रत्ययानां रसादिविषये प्रवृत्तिः इष्टैवेतिकृत्वा सूत्रमिदं नारम्भणीयमिति प्रत्याख्यातमाकरे ।

---

[1] म भा पु IV पु सं 337

**तृतीयः पादः**

## ११८. एतदोऽन्

**सूत्रार्थः :-** एतदः एतैतौ स्तः । रकारथकारादौ प्राग्दिशीये परे । एतदः अन्स्यात् ।

**प्र.अ :-** अनो नकारः प्रत्याख्यातः ।

**प्र.क्रमः** :अत्र सूत्रे अनो नकारः प्रत्याख्यातः । **तस्मान्नकारः कर्तव्यः । न कर्तव्यः । क्रियते न्यास एव। प्रश्लिष्टनिर्देशोऽयम्** ।[1] नकारस्तावत् सर्वादेशसंपादनार्थमत्र पठितः । परमत्र नकारं विनाऽपि सर्वादेशः सम्पादयितुं शक्यते । कथमिति चेत् अकारस्य प्रश्लिष्टत्वात् । अ-अ-अ इति रूपेण प्रश्लिष्य न्यासः क्रियते इति कृत्वा अनेकाल्त्वात् सर्वादेशः सिध्यतीति अनो नकारः प्रत्याख्यातः ।

**प्र.सू.स्व :-** एतदः अः ।

## ११९. तदो दा च

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

---

[1] म भा पु IV पु सं 362

**प्र.क :-** सूत्राऽभावेऽपि तदा इति रूपं सिद्धम् । तथाहि – "सर्वैकान्यकिंयत्तदः काले दा" इति विधानात् । "दानीं च" इति सूत्रात् दानीं प्रत्ययो विधीयते । एवञ्च तदा, तदानीमिति च सिद्धम् ।[1]

## १२०. किं यत्तदो निर्धारणे द्वयोरेकस्य डतरच्

**सूत्रार्थः :-** द्वयोरेकस्य निर्धारणे गम्ये निर्धार्यमाणवाचिभ्यः किमादिभ्यः डतरच्।

**प्र.अ :-** द्वयोः ।

**प्र.क :-** अत्र द्वयोरेव निर्धारणे डतरच् भवत्वित्येतदर्थं द्वयोरिति सूत्रे गृहीतम्। परं बह्वर्थेऽपि डतरचो दृष्टत्वात् एतत्सूत्रे भाष्यकारैः द्वयोरितिग्रहणं प्रत्याख्यातमाकरे । **किमादीनां द्विबह्वर्थे प्रत्ययविधानात् उपाध्यानर्थक्यम् ।**[2] यथा द्वयोरेकस्य निर्धारणे डतरच् भवति तद्वत् बहूनामपि एकस्य निर्धारणे डतरच इष्टत्वात् द्वयोरिति प्रत्याख्यातमाकरे ।

**प्र.सू.स्व :-** किं यत्तदो निर्धारणे एकस्य डतरच् ।

## १२१. वा बहूनां जातिपरिप्रश्ने डतमच्

**सूत्रार्थः :-** बहूनां मध्ये जातिपरिप्रश्ने डतमच् वा ।

**प्र.अ :-** बहूनाम् ।

---

[1] भा.पु.स.४ पृ.स.३६५

[2] म भा पु IV पु सं 402

**प्र.क :-** अनिर्ज्ञाते परिप्रश्नस्यावसरः । अनिर्ज्ञातिश्च बहूनामेव विषये एव। ततः द्वेकयोः विषये सर्वदा निर्ज्ञातमेव इति कृत्वा परिप्रश्नस्याभावात् तद्यावृत्यर्थं बहूनामिति ग्रहणं न कर्तव्यमिति प्रत्याख्यातमाकरे । **बहुग्रहणमनर्थकम् ।** [1]

**प्र.सू.स्व :-** वा जातिपरिप्रश्ने डतमच् ।

## १२२. एकाच्च प्राचाम्

**सूत्रार्थः :-** डतरच् डतमच् वास्यत् ।

**प्र.अ :-** प्राचाम् ।

**प्र.क :-** विकल्पेन प्रत्ययप्राप्त्यर्थं सूत्रेऽस्मिन् प्राग्ग्रहणं कृ तम् । विभाषाप्रकरणात् । **प्राग्वचनानर्थक्यञ्च विभाषाप्रकरणात् ।**[2] विकल्पेन प्रत्ययप्राप्तिस्तावत् विभाषाप्रकरणदेव सिध्यतीति कृत्वा तदर्थं प्राग्वचनं प्रत्याख्यातमाकरे ।

**प्र.सू.स्व :-** एकाच्च ।

**चतुर्थः पादः**

## १२३. पादशतस्य सङ्ख्यादेर्वीप्सायाम् वुन्लोपश्च

**सूत्रार्थः :-** सङ्ख्यादेः पादशतात् वीप्साविशिष्टार्थवृत्तेः स्वार्थे वुन्, प्रकृतेः अन्त्यस्य लोपश्च ।

---

[1] म भा पु IV पु सं 402

[2] म भा पु IV पु सं 403

**प्र.अ :-** पादशतस्य ।

**प्र.क्र :-** संङ्ख्यादेः पादान्तात् , संङ्ख्यादेः शतान्तात् च वुन्प्रत्ययो भवत्वित्येतदर्थमत्र सूत्रे पादशतग्रहणं कृतं वर्तते । परन्तु ततोऽन्यत्राऽपि वुनो दर्शनात् पादशतग्रहणं प्रत्याख्यातमाकरे । **पादशतग्रहणम् अनर्थकमन्यत्रापि दर्शनात्** ।[1]

**प्र.सू.स्व :-** सङ्ख्यादेर्वीप्सायाम् वुन्लोपश्च

## १२४. न सामिवचने

**सूत्रार्थः :-** सामिपर्याये उपपदे क्तान्तात् न कन् ।

**प्र.अ :-** न सामिवचने ।

**प्र.क्र :-** साम्यर्थबोधके उपपदे सति क्तान्तात् कन् प्रत्ययस्य प्रतिषेधार्थं सूत्रमिदमारब्धम् । परन्तु सामिकृतमिति समस्तस्य क्तान्तत्वाभावदेव कनः अप्रसक्त्या तद्बाधनार्थं सूत्रमिदं नारम्भणीयमिति प्रत्याख्यातमाकरे । **सामिवचने प्रतिषेधानर्थक्यम्** ।[2]

**प्र.सू.स्व :-** संपूर्णं सूत्रं प्रत्याख्यातम् ।

## १२५. किमः क्षेपे

**सूत्रार्थः :-** क्षेपेयः किं शब्दः ततः परं यत् तदन्तात् समासान्ताः नस्युः।

---

[1] म भा पु IV प सं 406

[2] म भा पु IV प सं 407

**प्र.अ :-** क्षेपे।

**प्र.क :-** क्षेपभिन्नार्थककिम्पूर्वपदात् समासात् समासान्तो माभूदित्येतदर्थं क्षेपग्रहणं कृतं सूत्रे। अत्र किम्पूर्वपदः समासः उद्देश्यत्वेन स्वीकृतः। स च समासः किमः क्षेपे इति सूत्रेणैव विधीयमानः। तस्मादत्र क्षेपार्थकस्यै ग्रहणं प्रतिपदोक्तत्वात् । **क्षेपे इति शक्यमवक्तुम्। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ।** अतः क्षेपे इति न कर्तव्यम् ।

**प्र.सू.स्व :-** किमः ।

## १२६. अह्नोऽह्न एतेभ्यः

**सूत्रार्थः :-** सर्वादिभ्यः सङ्ख्याव्ययाभ्याञ्च । परस्य अहन् शभस्य अन्हादेशस्यात् । समासान्ते परे ।

**प्र.अ :-** अह्नः ।

**प्र.क्रमः** :- अत् अह्नोऽह्न एतेभ्यः इति न्यासो न कर्तव्यः । अह्न एतेभ्यः इत्येतावदेव वक्तव्यम् । अच् प्रत्ययश्च विधातव्यः । अचि विहिते तु अल्लोपोऽनः इत्येव लोपो भवतीति कृत्वा इष्टं रूपं सिध्यति । अह्नष्ठखोरेव इति तु नियमार्थं भवति। नस्तद्धिते इत्यनेन सिद्धत्त्वात् । प्रकृते न प्रवर्तते अनेन अचो विधानात् । **अह्नोऽह्नवचनमनर्थकम् ।**[1]

**प्र.सू.स्व :-** अह्न एतेभ्यः।

---

[1] म भा पु IV पु सं 419

# षष्ठाध्याये प्रत्याख्यातानि सूत्राणि

**प्रथमः पादः**

## १२७. अजादेर्द्वितीयस्य

**सूत्रार्थः** :- अजादेर्धातोः द्वितीयस्याचो द्वित्वम् ।

**प्र.अ** :- द्वितीयस्य ।

**प्र.क** :- अजादेर्धातोः द्वितीयस्याचो द्वित्वं भवतु इत्येतदर्थं सूत्रेऽस्मिन् द्वितीयस्य इति पदं गृह्यते। तच्च भाष्यकारैः प्रत्याख्यातम् । **द्वितीयस्य इत्यवचनम् । कर्मधारयात् पञ्चमी ।**[1] सूत्रेऽस्मिन् द्वितीयस्य इति त्यक्तुं शक्यम्। यद्येवं तर्हि अजादेः यथा द्वितीयस्य , तद्वत् प्रथमस्यापि द्वित्वं स्यात् खल्विति चेत् , न । अत्र अजादेरिति कर्मधारयः स्वीक्रियते। अच्च असावदिश्च अजादिः । तस्मात् अजादेः । एवं पञ्चमीनिर्देशात् तदुत्तरस्यैव द्वीयस्य प्राप्नोतीति कृत्वा द्वितीयस्य इति ग्रहणं प्रत्याख्यातमाकरे ।

**प्र.सू.स्व :- अजादेः ।**

## १२८. लिटि धातोरनभ्यासस्य

**सूत्रार्थः** :- लिटि अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वेस्तः, अजादेस्तु द्वितीयस्य।

---

[1] म भा पु V पु सं 12

**प्र.अ :-** अनभ्यासस्य।

**प्र.क :-** कृष्णो नोनाव वृषभो यदीदम् इत्यत्र वाक्ये नोनाव इत्यत्र अभ्यासस्य पुनः द्वित्वं माभूत् इत्येतदर्थमत्र सूत्रे अभ्यासप्रतिषेधः इत्युक्तम्। परन्तु छन्दसि अभ्यासस्य विकल्पेन द्वित्ववचनात् प्रतिषेधोऽनर्थकः। **अभ्यासप्रतिषेधानर्थक्यञ्च छन्दसि वा वचनात् ।** [1] तस्मात् अभ्यासप्रतिषेधः प्रत्याख्यातः ।

**प्र.सू.स्व :-** लिटि धातोः ।

## १२९. स्वापेश्चङि

**सूत्रार्थः :-** ण्यन्तस्य स्वापेः चङि संप्रसारणं स्यात् ।

**प्र.अ :-** चङि इति प्रत्याख्यातम् ।

**प्र.क :-** ण्यन्तस्य स्वापेः चङि संप्रसारणं स्यात् । ञिश्वप् शये इति धातोः सूत्रेणानेन संप्रसारणं विधीयते । ण्यन्तस्य स्वपि – धातोः लुङि, तिपि, अडागमे, अस्वपि च्लि त्, च्लेः चङि, "इतश्च" इति इकारलोपे, अस्वपि चङ् त्, "णेरनिटि" इति णेर्लोपे, स्वप् अ त्, संप्रसारणं तदाश्रयञ्च कार्यं बलवत् इति हेतोः संप्रसारणम्, अ सु अप् अत् इत्यत्र पूर्वरूपे, असुप् अत्, "चङि" इति द्वित्वे, असु सुप् अत् "आदेशप्रत्यययोः" इति षत्वे, "दीर्घो लघोः" इति दीर्घे, च असूषुपत् । एवञ्च निरुक्तधातोः ण्यन्तात् लुङि, च्लेः चङं विधाय असूषुपत् इतीष्टं साधितम् । तच्च चङ् - ग्रहणमन्तरेणापि सिध्यति । तथा हि - स्वापेः चङः अन्यो

---

[1] म भा पु V पु सं 23

ङित्प्रत्ययो नास्ति । न च यङस्ति खल्वित्याशङ्क्यम् – "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन एकाचो विहितो यङ् अनेकाचो धातोः स्वापेः न भवति । न चाङस्तीति वाच्यम् - अङ्विधायक शास्त्रेषु स्वापेरग्रहणात् अपित् सार्वधातुकात् प्रत्यया न भवन्ति, विकरणैर्व्यवहितत्वात्। तस्मात् स्वापेः चङोऽन्यो न भवति ङित् प्रत्ययः । योऽयं वर्तत ङित् स चङेव । तस्मात् चङ्ग्रहणाभावेऽपि स्वापेश्चङेव सिध्यतीति कृत्वा चङ्ग्रहणं न कर्तव्यम् । तस्मात् स्वापेः इत्येव सूत्रमलम् ।

**प्र.सू.स्व :-** स्वापेः ।[1]

## १३०. वश्चास्यान्यतरस्यां किति

**सूत्रार्थः :-** वचो वस्य वो वा स्यात् लिटि किति । तेन ऊवतुः, ऊवुः, इति सिद्धम्।

**प्र.अ :-** वश्चास्यग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** वेञ् धातोः लिटि "वेञो वयिः" इति वयादेशे, वय् लिट्, लिटः तसि, "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इति अतुसि, सम्प्रसारणे उय् अतुस् इति स्थिते द्वित्वे, अभ्यासकार्ये, उ उयत् अतुस् इत्यत्र सवर्णदीर्घे, रुत्वविसर्गयोः कृतयोः ऊयतुः इति । अत्र यो वयो यः तस्य विकल्पेन वादेशो भवति। तस्मात् ऊयतुः, ऊवतुः इति रूपे । ऊयतुः, ऊवतुः इति रूपं वश्चास्यग्रहणाभावेऽपि

---

[1] भा.पु.स.५ पृ.स.४०

साधयितुं शक्यते । तथा च अन्यतरस्यां किति इति सूत्रम् । अत्र न सम्प्रसारणमिति अनुवर्तते । ततश्च वेञो न सम्प्रसारणं कित्यन्यतरस्याम् इति सूत्रार्थो लभ्यते । एवञ्च विकल्पेन सम्प्रसारणे प्राप्ते वेञः सम्प्रसारणपक्षे सम्प्रसारणे द्विर्वचने सवर्णदीर्घे च रूपं सिद्ध्यति । तथाहि – वेञ् धातोः लिटि "आदेच उपदेशेऽशिति" इति आत्वे, सम्प्रसारणकार्ये उ अतुस् इत्यवस्थायाम् उवङि, द्वित्वे, उव् उव् अतुस्, ततश्च अभ्यासकार्ये, सवर्णदीर्घे च ऊवतुः इति रूपम् । सम्प्रसारणाभावपक्षे वेञ् धातोः लिटि "आदेच उपदेशेऽशिति" इति आत्वे, वा अतुस् इत्यवस्थायां द्वित्वे अभ्यासकार्ये च कृते व वा अतुस् इत्यत्र "आतो लोप इटि" चेति आकारलोपे ववतुः इति रूपम् ।

सम्प्रसारणसहितवयादेशपक्षे वेञ् धातोः लिटि, "आदेच उपदेशेऽशिति" मइति आत्वे "वेञो वयिः" इति वयादेशे वय् अतुस्, सम्प्रसारणकार्ये, उय् अतुस्, ततश्च द्वित्वे, अभ्यासकार्ये, सवर्णदीर्घे, च ऊयतुः इति। एवञ्च यदिष्टं त्रैरूप्यं तत् अन्यतरस्यां कितीत्येतावतैव सिध्यतीति हेतोः वश्चास्यग्रहणं न कर्तव्यम् ।

**प्र.सू.स्व :-** अन्यतरस्यां किति ।[1]

## १३१. शेश्छन्दसि बहुलम्

**सूत्रार्थः :-** शेः बहुलं लोपः स्यात् छन्दसि ।

**प्र.अ :-** शेश्छन्दसि बहुलम् ।

---

[1] भा.पु.स.५ पृ.स.४९

**प्र.क :-** यत् शब्दस्य क्लीबे , जसि यानि इति रूपं लोके । छन्दसि तु यत् शब्दात् जसि , त्यदाद्यत्वे , शि इत्यादेशे , नुमगमे , शेर्लोपे ,उपधादिदीर्घे , नलोपे, या इति रूपम् । छन्दसि शेर्लोपं विनाऽपि या इति रूपं सम्पादयितुं शक्यमिति कृत्वा सूत्रमिदं प्रत्याख्यातमाकरे । **अयं योगः शक्योऽवक्तुम् ।** [1] यत् शब्दात् जसि त्यदाद्यत्वे य इति, ततः जसः शि इत्यादेशे कृते तस्य च सुपां सुलुक् इत्यादि सूत्रेण आकारादेशे सति पूर्वसवर्णदीर्घेण या इति सिध्यतीति कृत्वा सूत्रमिदं प्रत्याख्यातमाकरे ।

## १३२. संहितायाम्

**सूत्रार्थः :-** अधिकारोऽयम् । इतः परं यद्वक्ष्यामः तत्संहितायामेव वेदितव्यम्

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** स्वच्छाया इत्यादिषु स्वारसिकार्धमात्राकालव्यवायेन उच्चरितस्यैव "ह्रस्वस्य पिति कृति तुक्"(६/१/७०) इत्यनेन ह्रस्वस्य तुग्भवतीति इति बोधानार्थं संहितायामित्त्यारब्धम् । येन च स्वच्छाया इति समस्तप्रयोग एव तुग्भवति इति अर्थः फलितः । परं विनाप्यधिकारम् अयमर्थः संपादयितुं शक्यः । तद्यथा -

अधिकरणन्नाम त्रिप्रकारम् - व्यापकम्, औपश्लेषिकम्, वैषयिकम् - इति। इदं भाष्ये एव प्रकाशितम् । यथा दीपः इत्यादिना भागेन । 'शब्देन शब्दस्य

---

[1] म भा पु V पु सं 72

कोऽन्योऽभिसंबन्धो भवितुमर्हति अन्यदत उपश्लेषात्'[1] इति भाष्यमर्यादया उपश्लेषार्थस्वीकारात् सामीप्यमेव गम्यते इति कृत्वा न दोषः ।[2]

## १३३. एकः पूर्वपरयोः

**प्र.अ :-** एकग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** पृथगादेशे प्राप्त उभयोरेकादेशविधानार्थमिदम् । तच्च लौकिकोदाहरणेन अन्यथासिद्धम् । एक ग्रहणं किमर्थमित्युक्त्वा तदनन्तरं तत् प्रयोजनं निरस्तं वार्तिकाभ्याम् । ते च वार्तिके –"न वा द्रव्यवत्कर्मचोदनायाम् द्वयोः एकस्य अभिनिवृत्तिः"[3]। द्रव्यवत्कर्मचोदनायां द्वयोरेकस्यैवाभिनिर्वृत्तिरिति । तद्यथा 'अनयोः पूलयोः कटङ्कुरु' इति । न चोच्यते एकमिति । स तावत् एकवत्करोति। एकस्याभिनिवृत्तये कारणमुक्तं वार्तिकेन । एवञ्च विनापि एकग्रहणं सिध्यति एकस्यैवादेशः । तथाहि –'अनयोः पूलयोः कटं कुरु' इत्यादौ लोके यथा पूलयोरिति द्विवचनस्वारस्येन एकवाक्यताया उचिततया तथैव बोधात्, कटमित्यस्य विधेयबोधकतया तत्रैकत्वस्य विवक्षणेन उभयसंबन्ध्येककटकरणप्रतीतिस्तथा आदचि पूर्वपरयोः गुणः स्यादिति गुण इत्यादेः विधेयसमर्पकत्वेन तद्गतैकत्वसङ्ख्याविवक्षणात् उभयोः स्थाने एक आदेश

[1]भा.पु.स.५ पृ.स.७४

[2]भा.पु.स.५ पृ.स.७४

[3] भा.पु.स.५ पृ.स.

इत्यर्थो लभ्यते । एवं द्वन्द्वसमासस्य सहविवक्षायामेव साधुत्वेन पूर्वपरयोरिति इतरेतरयोगद्वन्द्वनिर्देशेनोभयोरपि एकस्मिन् गुणे सहान्वयाच्च, अग्नीषोमाभ्यामित्यादौ द्वन्द्वोत्तरचतुर्थ्या एकप्रदेशनिरूपितदेवतात्वबोधवत् पूर्वपरयोरित्यत्र द्वन्द्वोत्तरषष्ठ्या एकविधेयनिरूपितविशिष्टैक-स्थानित्वबोधनेनात्रादेशद्वय - निवृत्तौ सिद्धायाम् एकग्रहणं स्पष्टार्थम्। तस्मादेकग्रहणं प्रत्यख्यातुं योग्यम्[1]।

**प्र.सू.स्व :-** पूर्वपरयोः ।[2]

## १३४. ओमाङोश्च

**सूत्रार्थः :-** ओमि आङि चात्परे पररूपमेकादेशस्स्यात् ।

**प्र.अ :-** चकारः प्रत्याख्यातः ।

**प्र.क्र :-** चकारः किमर्थः पठ्यते इति प्रश्ने एङि पररूपम् इत्यतः एङि इति अनुवृत्तेः द्योतनार्थम् । तत्प्रयोजनं किमिति चेत् अद्य आ ऋश्यात् इत्यत्र अद्यार्शात् इति यथा स्यात् अद्यर्श्यात् इति माभूदित्येतदर्थम् इति चेत् अद्यर्श्यात् इत्येव इश्यते इति कृत्वा चकारः प्रत्याख्यातः ।

**प्र.सू.स्व :-** ओमाङोः ।[3]

---

[1] भा.पु.स.५ पृ.स.८०-८४

[2] भा.पु.स.५ पृ.स.८१

[3] भा.पु.स.५ पृ.स.१०७

## १३५. इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च

**प्र.अ :-** च इति प्रत्याख्यायते ।

**प्र.क :-** अत्र चकारग्रहणं किमर्थमिति प्रश्नः । प्रकृत्या भवतीत्येतदर्थप्रतिपादनाय। प्रतिपाद्य च स्वरसन्ध्यभावः साध्यते। इति चेत् न – सूत्रे ह्रस्ववचनसामर्थ्यादेव स्वरसन्धिर्न भवति। पदान्तानामिकां दीर्घाणां ह्रस्वविधानादनन्तरमपि यदि स्वरसन्धिस्स्यात् तर्हि ह्रस्वविधानमेवानर्थकं स्यात्।

दीर्घाणां स्वरसन्धिर्न भवति चेदपि ह्रस्वस्य सन्धिः प्राप्नोत्येवेति चेत् – तत्रापि ह्रस्वविधानसामर्थ्यात्सन्धिर्न भविष्यति । ह्रस्वानां विषये ह्रस्वविधानं कर्तव्यं नास्ति यतः "न हि भुक्तवान् पुनर्भुङ्क्ते" एवं "कृतः श्मश्रुः पुनः श्मश्रूणि कारयति" इति तद्वत् ह्रस्वानां पुनर्ह्रस्वो न भवति । शिल्पिविशेषात्, भोजनविशेषादपि कदाचित् कृतभोजनोऽपि कृतश्मश्रुरपि प्रवर्तते यथा तद्वत् ह्रस्वानामपि पुनर्ह्रस्वविधिः प्राप्नोति । तदर्थं ह्रस्वग्रहणमिति चेत् – अकृतकारि सूत्रमग्निवत्। यथाग्निः अदग्धं तद्दहति तद्वत् शास्त्रं कृतमेव कार्यं न करोति इति कृत्वा ह्रस्वग्रहणं नापेक्षितम्। तथापि यद्ध्रस्वानां ह्रस्वविधानं क्रियते तस्य तत्प्रयोजनं स्वरसन्धिर्माभूदिति।

---

शास्त्रं तावत् अकृतकारि न, अपि तु कृतकार्येव । यथा पर्जन्यो यावदूनञ्च पूर्णञ्च सर्वञ्चाभिवर्षति तद्वदिदं शास्त्रम् । तस्माद्ध्रस्वानां पुनर्ह्रस्वविधानसामर्थ्यादेव स्वरसन्ध्यभावोऽवगम्यते । ततः तदर्थत्वेन चकारो न कर्तव्यः ।

**प्र.सू.स्व :-** इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ।[1]

## १३६. ई३चाक्रवर्मणस्य

**सूत्रार्थः :-** ईकारः प्लुतोऽचि परे अप्लुतवद्वा स्यात् ।

**प्र.अ :-** ई३कारग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** ई३चाक्रवर्मणस्य इत्यत्र ई३कारग्रहणस्य प्रयोजनं – चिनुही३ इदमिति स्थिते ईकारः प्लुत इति कृत्वा प्रकृतिभावे प्राप्ते प्लुतत्वं विकल्पेन विधातुमत्र सूत्रमारभ्यते। तस्मात् चिनुहीदं चिनुही३ इदमिति रूपे सिद्धे। इदं रूपद्वयं साधयितुं सूत्रमिदं नापेक्षितम् । तथाहि – "प्लुतप्रगृह्या अचि नित्यम्" इत्यतः प्लुत इत्यनुवर्तते। चाक्रवर्मणस्येति ऋषेर्नामस्मरणात् विकल्पः सिध्यति ।

**प्र.सू.स्व :-** चाक्रवर्मणस्य।

[1] भा.पु.स.५ पृ.स.१३०

**तृतीयः पादः**

**१३७. घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः**

**सूत्रार्थः** :- भाषितपुंस्कात् यो ङि, तदन्तस्यानेकाचो ह्रस्वस्स्याद्घरूपकल्पप्रत्ययेषु परेषु, चेलडादिषु चोत्तरपदेषु ।

**प्र.अ :-** ङी ग्रहणं सूत्रे प्रत्याख्यातम् ।

**प्र.क्र :-** प्रकृतसूत्रे ङ्योनेकाचो ह्रस्व इति पठितम् । अत्र ङीग्रहणं किमर्थङ्क्रियत इति प्रश्नः । ङीप्ग्रहणाभावे घरूपकल्पबादिषु प्रत्ययेषु परेषु चेलडादिषु च उत्तरपदेषु अनेकाचो ह्रस्वः इति सूत्रार्थः स्यात् । तस्मात् खट्वातरा, मालातरा इत्यादिषु खट्वा, माला इत्यादीनां ङ्यन्तत्वाभावेऽपि अनेकाच्त्वमात्रेण सूत्रस्य प्रवृत्तिः स्यात् । प्रवृत्तौ च खट्वतरा, मालतरा इत्यनिष्टं प्रसज्येत। अतो ङीग्रहणं कर्तव्यम् । क्रियमाणे च ङीग्रहणे खट्वामालयोरुभयोरपि ङ्यन्तत्वाभावात् "घरूप कल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः" इति सूत्रं न प्रवर्तत इत्यतो न दोषः । तस्मात् सूत्रे ङीप्ग्रहणं कर्तव्यम् । इति चेन्न –

खट्वातारा, मालातारा इत्यादिषु ह्रस्ववारणार्थं सूत्रेऽस्मिन् ङीग्रहणं न कार्यम्। कुत इति चेत् "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रेण भाषितपुंस्कादिति अनुवर्तत इति कृत्वा खट्वातारा, मालातारा इत्यादौ घप्रत्ययात् पूर्वं विद्यमानयोः खट्वामालयोः भाषितपुंस्कत्वाभावात् ङीग्रहणाभावेऽपि खट्वातारा, मालातारा इत्यादिषु घरूप इत्यादिसूत्रं न प्रवर्तते। तस्मात् खट्वातारा, मालातारा इत्यादौ ह्रस्ववारणार्थं न

कर्तव्यम् इति स्थितमिति चेत् - घप्रत्यये यत्र ङ्यन्तभिन्नभाषितपुंस्को भवति तत्रातिव्याप्तिः स्यात् । तथा हि – गुप्तातारा, दत्तातारा इत्यादिषु घप्रत्यये परे गुप्तदत्तयोः परयोः भाषितपुस्कत्वधर्मयुक्तयोरपि प्रकृतसूत्रेण ह्रस्वस्स्यात् । अतस्तद्वारणार्थं ङीप्ग्रहणम् इति चेत् – न । तथाहि घरूप इत्यादि सूत्रं प्रति "स्वाङ्गाच्चोपसर्जनादसंयोगोपधाद्" इति सूत्रात् ईत इत्यनुवर्तते । तस्मादीकारान्तो यो नपुंसकः तस्यैव ह्रस्व इति वक्तुं शक्यम् । तस्मात् गुप्तदत्तयोः भाषितपुंस्कत्वेऽपि ईकारान्तत्वाभावात् घरूप इत्यादि सूत्रविषयत्वमेव नास्ति । तस्मात् गुप्तातारा, दत्तातारा इत्यत्र ह्रस्ववारणार्थं ङीप्ग्रहणमिति न वक्तव्यम् इति चेत् न ।

ईकारान्तस्य भाषितपुंस्कस्य घादिषु परेषु ह्रस्व इत्युच्यमाने सेनानीतरो ग्रामणीतर इत्यत्रापि ह्रस्वापत्तिः । घप्रत्यये भाषितपुंस्कस्य ईकारान्तस्य सत्वात् । अतः तद्वारणार्थं ङीप्ग्रहणं कर्तव्यं, क्रियमाणे च यद्ययमीकारान्तस्तथापि ङ्यन्तो नेति कृत्वा दोषो वार्यते । अतो ङीग्रहणं कर्तव्यम् । क्रियमाणे च सेनानीतरो ग्रामणीतर इत्यादिषु ह्रस्वव्यावृत्तिः सिद्ध्यति । इदमेव ङीप्ग्रहणस्य प्रयोजनमिति चेत् – न । "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रात् स्त्रिया इत्यनुवर्तते । तस्मात् प्रकृते स्त्रीविषयाभावात् घरूप इत्यादिसूत्रं न प्रवर्तते । अतः सेनानीतरो ग्रामणीतर इत्येतदर्थं ङीग्रहणं न कर्तव्यम् । यदि ङीग्रहणं न क्रियते तर्हि घप्रत्यये परे अनेकाचः स्त्रियां विद्यमानस्य ईकारान्तस्य ह्रस्वः प्राप्नोति । ततोऽतिव्याप्तिः ।

तथा हि – सेनानीतरा, ग्रामणीतरा इत्यादिषु घप्रत्यये परे पूर्वं विद्यमानयोः सेनानीग्रामणीशब्दयोः अनेकाच्त्वम् ईकारान्तत्वं च वर्तते । एवं सेनानितरा, ग्रामणीतरा इत्युभयं स्त्रियाञ्च वर्तते । तस्मादत्रापि ह्रस्वापत्तिः येन च दोषः स्यात् । अतो ङीग्रहणङ्कर्तव्यमिति चेत् – न । "स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु" इति सूत्रात् "स्त्रियाम् इत्यप्यनुवर्तते । एवञ्च सेनानितरा, ग्रामणीतरा इत्यभुयोः स्त्रीविषयत्वसद्भावेऽपि ईकारस्तावत् स्त्रीवाचको नेति कृत्वा ह्रस्वो न भविष्यति ॥

**प्र.सू.स्व :-** घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु - अनेकाचो ह्रस्वः ।[1]

## १३८. नद्याः शेषस्यान्यतरस्याम्

**सूत्रार्थः :-** अङ्यन्तनद्या ङ्यन्तस्यैकाचश्च घादिषु ह्रस्वो वा।

**प्र.अ :-** शेषः इति प्रत्याख्यातम् ।

**प्र.क :-** शेषग्रहणस्य प्रयोजनं किमिति प्रश्ने, प्रकृतसूत्रं प्रत्यनेकाचो ङीति द्वयमनुवर्तत इति कृत्वा तस्मादन्यश्शेषो भवति । तस्माद्योऽङ्यन्तो नदीसंज्ञक एवमङ्यन्त एकाच् तस्य च घादिषु परे ह्रस्वविध्यर्थं शेषग्रहणं कर्तव्यम् । ब्रह्मबन्धूतरा इति स्थिते विकल्पेन ह्रस्वो भवति । तस्मात् ब्रह्मबन्धुतरा, ब्रह्मबन्धूतरा इति च सिद्ध्यति । इदञ्च आण्नद्याः स्त्रितरा स्त्रीतरा इति द्वयं ङ्यन्तस्यैकाच उदाहरणम् । एतादृशप्रयोजनं मनसिकृत्य शेषग्रहणं क्रियते ।

[1] भा.पु.स.५ पृ.स.२३८

इदञ्च प्रयोजनं शेषग्राहणाभावेऽपि सिद्ध्यति । कथमिति चेत् – नद्याः शेषस्यान्यतरस्यामिति सूत्रं शेषग्रहणं विना पठ्यते । नद्या अन्यतरस्यां ह्रस्वो भवतीत्यर्थः । अयञ्चोत्सर्गः "घरूप कल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः" इति सूत्रेण ङ्यन्तस्यानेकाचो घादिषु परे ह्रस्वो विधीयत इति कृत्वा सोऽयमपवादः । एवञ्च ङ्यन्तविषये नित्यं ह्रस्वस्सिध्यति। "घरूप कल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः" इति नित्ये प्राप्त उगितश्च इति सूत्रेण उगिदन्तात् परा या नदी तस्य घादिषु ह्रस्वो विकल्पेन विधीयते । एवं च नद्या अन्यतरस्यामित्यनेन वा ह्रस्वो विधीयत इति कृत्वा ब्रह्मबन्धुतरा, ब्रह्मबन्धूतरा इति स्त्रितरा, स्त्रीतरेति च सिद्ध्यति ।

घरूप इत्यदिना ब्राह्मणितरा, ब्राह्मणितमा इति नित्यं ह्रस्वो भवति । "उगितस्च" इत्यनेन वा ह्रस्वविधाने विदुषितरेति ह्रस्वो, ह्रस्वाभावपक्षे "तसिलादिष्वाकृत्वसुचः" इति पुँव्वद्भावे विद्वत्तरेति च सिद्ध्यति । एवमकृतेऽपि शेषग्रहणे सर्वं लक्ष्यं सुसाध्यमिति कृत्वा शेषग्रहणं न कर्तव्यम् ।

**प्र.सू.स्व :-** नद्याः अन्यतरस्याम् ।[1]

---

[1] भा.पु.स.५ पृ.स.२३८

**चतुर्थः पादः**

## १३९. अङ्गस्य

**सूत्रार्थः** :- अधिकारोयम् । यदितः ऊर्ध्वमनुक्रमिष्यामः तत् अङ्गस्यैव इति वेदितव्यम् ।

**प्र.अ :-** अङ्गस्य ।

**प्र.क :-** सूत्रस्यास्य प्रयोजनानामन्यथा सिद्धत्वात् सूत्रमिदं प्रत्याख्यातमाकरे। यत्र तु प्रत्ययः निमित्तत्वेन स्वीक्रियते तत्र प्रत्ययग्रहणपरिभाषया तस्मिन्प्रत्यये परतः पूर्वस्यैव ग्रहणात् अङ्गग्रहण्णाभवेऽपि न दोषः। यत्र प्रत्ययस्य कार्यित्वं तत्र तावत् तदादिग्रहणं केवलं गृह्यते इति कृत्वा अङ्गस्यैव प्राप्नोति। ततः सूत्रमिदं प्रत्याख्यातमाकरे। **नैतानि सन्ति प्रयोजनानि। अर्थवद्ग्रहणप्रत्ययग्रहणात्सिद्धम् ।**
[1]

## १४०. जनसनखनां सञ्झलोः

**सूत्रार्थः :-** एषामाकारोन्तादेशस्यात् झलादौ सनि झलादौ क्डिति च ।

**प्र.अ :-** झल् ग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** सूत्रेणानेन नकारस्य अकारो विधीयते । यदि सञ्झलोरिति समुच्चयः इति पक्षे सनि , झलि च आत्वं भवति । अतः जिजनिषति इत्यत्र आत्वं स्यादिति दोषः । यदि सन्विशेषणं झल्ग्रहणमिति स्वीक्रियते तर्हि जातः , जातवान् इत्यादिषु

---

[1] म भा पु V पु सं 272

आत्वं न स्यात् । तस्मात् पूर्वत्र विद्यमानं झल्ग्रहणमनुवर्तते । अनुवृत्तेन च सनं विशेषयित्वा झलादौ सनि इति व्याख्यानं क्रियते । तस्मात् जिजनिषतीत्यत्र सनो झलादित्वाभावात् न दोषः । सन्विशेषणपक्षे तु प्रकृतं झलि क्ङिति ग्रहणमनुवर्तते । ततः जातः इत्यादौ आत्वं सिध्यति । एवं पक्षद्वयेऽपि दोषवारणार्थं प्रकृतं झल्ग्रहणमनुवर्तिष्यते तर्हि सूत्रस्थं झल्ग्रहणं नापेक्षितमिति प्रत्याख्यातमाकरे ।

**यद्येवं नार्थो झल्ग्रहणेन ।**[1]

**प्र.सू.स्व :-** जनसनखनां सनि ।

## १४१. सनः क्तिचि लोपश्चास्यान्यतरस्याम्

**सूत्रार्थः :-** सनोतेः क्तिचि आत्वं स्याल्लोपश्च ।

**प्र.अ :-** क्तिचि इति प्रत्याख्यायते ।

**प्र.क्र :-** सन् धातोः क्तिच् प्रत्यये, सन् ति इति स्थिते अन्त्यनकारस्य लोपः सनः इति षष्ठीश्रवणात् । ततश्च सतिः इति रूपम् । सन् धातोः क्तिच् प्रत्यये सन् ति स्थिते सनः इति षष्ठीश्रवणात् नकारस्यैव दीर्घः सातिः इति रूपम् । सनो नकारस्य लोपाभावे सन्तिः इति त्रैरूप्यं सिद्ध्यति । इदञ्च त्रैरूप्यं सनः क्तिचि इत्येतातवतैव सूत्रेण कर्तुं शक्यत इति कृत्वा लोप, चकार, अस्य, अन्यतरस्याम् इति च त्यक्तुं शक्यम् । कथमिति चेत् – लोपप्रकरणस्थत्वात् इदमपि सूत्रं लोपमेव विधत्त इति वक्तुं शक्यते । तस्मात् सतिरिति रूपं सिद्धम् । "ये विभाषा" इति

---

[1] म भा पु V पु सं 304

सूत्रेण विभाषापदानुवृत्तौ सतिः, सन्तिः इति रूपद्वयं सिद्ध्यति । "विड्वनोरनुनासिकस्यात्" इति सूत्रेण आदित्यनुवृत्तौ सातिः इति च सिद्ध्यति । एवञ्च त्रैरूप्यं यदिष्टं तत्सिद्धम् ।

**प्र.सू.स्व :-** क्तिचि ।[1]

## १४२. णेरनिटि

**सूत्रार्थः :-** अनिडादावार्धधातुके परे णेर्लोपः स्यात् ।

**प्र.अ :-** अनिटि इति प्रत्याख्यायते ।

**प्र.क्र :-** अनिडादावार्धधतुके परे णेर्लोपः स्यात् । अनिङ्ग्रहणं किमर्थमिति प्रश्नः। णे इति यदि केवलं सूत्रं स्यात्, तर्हि "अतो लोपः" इति सूत्रात् लोप इत्यनुवर्तत इति कृत्वा सर्वस्यापि णेर्लोपः स्यात् । येन च कारयितुं, करयिता इत्यादिष्वपि णेर्लोप आपद्येत । अतोऽस्माभिः अनिङ्ग्रहणं कर्तव्यम् । ननु च कथं तर्हि कारयितुं, करयिता इत्यादिष्वपि णेर्लोपो वार्यते इति चेदाह – णेरनिटि इति सूत्रेण यदा कृत्स्नस्य णेः लोपो विधीयते तदानीं निष्ठायां सेटि इत्यस्य प्रयोजनं नास्ति णेः इति सूत्रेणैव सेट्यनिट्युभयविषकणेः लोपस्य विहितत्वात् । तस्मात् णेः इति सूत्रेणैव सिद्धे पुनरारम्भो नियमाय भविष्यति । एवञ्च यदि णेर्लोपः तर्हि सेट्येवेति । तस्मात् कारयितुं, करयिता इत्यादिषु सेड्भावात् णिलोपो न भविष्यति ।

[1] भा.पु.स.५ पृ.स.३०७

तस्माद्धेतोः अस्मिन् सूत्रे अनिङ्ग्रहणं न कार्यम् । तस्मात् णेः इति सूत्रं स्थितमिति भाष्याशयः ।

**प्र.सू.स्व :-** णेः ।[1]

## १४३. घसिभसोर्हलि

**सूत्रार्थः :-** अनयोरुपधालोपः स्याद्धलादावजादौ च क्ङिति छन्दसि ।

**प्र.अ :-** हलि इति प्रत्याख्यातम् ।

**प्र.क्र :-** "अचिश्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यादिना अचीत्यनुवर्तते "तनिपत्योश्छन्दसि" इत्यतः छन्दसीति च । "गमहनजनखनघसां लोपः क्ङित्यनङि" इत्यादिना लोप इति च । "ऊदुपधाया गोहः" इत्यत उपधाया इति चानुवर्तते । तस्मात् घसिभसोरुपधाया लोपः स्यात् अजादौ हलादौ च क्ङिति छन्दसि इत्यर्थः । ततश्च क्तिनि सग्धिः इति रूपम् । अद् धातोः क्तिन्, "बहुलं छन्दसि" इति घसादेशे, घस् ति ,उपधालोपे घ् स् ति, "झलो झलि" इति सलोपे, घ् धि "झषस्तथोर्धोऽधः" इति धत्वे, "झलां जश् झशि" इति च जश्त्वे, च ग्धिः इति रूपम् । भस्ति इति स्थिते श्लुविकरणे भस् श्लौ ति, "श्लौ" इति द्वित्वे भस् भस् ति, "हलादिः शेषः" इति चर्त्वे बभस् ति, उपधा लोपे, चर्त्वे च बप्सति इति च सिध्यति। अचीत्यधिकारात् हल्ग्रहणाभावे हलि न स्यात् अच्येव स्यात् । अतो हल्यपि भवत्विति धिया हल्ग्रहणं क्रियते । तदुपादाने च अचि न स्यात् ।

---

[1] भा.पु.स.५ पृ.स.३१६

अतः चकारः अच्सम्भन्धार्थः क्रियते । तदुपादाने हि अचि च न स्यात् । अतः चकारः अच्संबन्धार्थः क्रियते । तत्र अच् ग्रहणस्य अधिकाराभावादेव घसिभसोरित्येतावता एव अचि हलि च लोपः सिध्यतीति कृत्वा हलि च इति सूत्रे न ग्रहणीयम् । अचीत्यधिकाराभावात् घसिभसोरित्येव सूत्रमलमिति पतञ्जल्याचार्याशयः ।

**प्र.सू.स्व :-** घसिभसोः ।[1]

## १४४. श्नसोरल्लोपः

**सूत्रार्थः :-** श्नस्य अस्तेश्च अकारस्य लोपस्यात् सार्वधातुके क्ङिति ।

**प्र.अ :-** अल्लोपः इत्यत्र तपरकरणं प्रत्याख्यातम् ।

**प्र.क्र :-** ह्रस्वाकारात् भिन्नानाम् अकाराणां लोपो माभूदित्येतदर्थमत्र सूत्रे तपरकरणं कृतम् । तस्मात् आसन् इत्यादिषु आकारलोपो न भवति। इति प्रयोजनम् । इदञ्च अन्यथैव सिद्धम् । **अथात्र तपरकरणं किमर्थम् ? इह माभूत्। आस्ताम् , आसन्। नैतदस्ति प्रयोजनम् , आटोऽसिद्धत्वात् सिद्धम् ।**[2] आटि कृते तु तस्यासिद्धत्वात् लोपो न भवतीति तपरकरणं प्रत्याख्यातमाकरे ।

**प्र.सू.स्व :-** श्नसोरलोपः ।

---

[1] भा.पु.स.५ पृ.स.३३७

[2] म भा पु V पु सं 343

## १४५. अर्वणस्त्रसावनञः

**सूत्रार्थः** :- नञा रहितस्यार्वन्नित्यस्याङ्गस्य तृ इत्यादेशस्स्यात् न तु सौ ।

**प्र.अ** :- सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- अर्वन् शब्दस्य शब्दस्य च तृ इत्ययमादेशो न वक्तव्य एतयोः छान्दसत्वात् । छन्दसि च दृष्टानुविधिर्भविष्यति । छन्दसि च अनयोः मतुबेवं वनिप् च विधीयते । तस्मादेव तत्र उभयमपि रूपं सिद्ध्यतीति हेतोः सूत्रमिदं न कार्यम् ।[1]

## १४६. मघवा बहुलम्

**सूत्रार्थः** :- मघवन् शब्दस्य वा तृ इत्यन्तादेशस्स्यात् ।

**प्र.अ** :- संपूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क** :- मघवन् शब्दस्य शब्दस्य च तृ इत्ययमादेशो न वक्तव्य एतयोः छान्दसत्वात् । छन्दसि च दृष्टानुविधिर्भविष्यति । छन्दसि च अनयोः मतुबेवं वनिप् च विधीयते । तस्मादेव तत्र उभयमपि रूपं सिद्ध्यतीति हेतोः सूत्रमिदं न कार्यम्[2] ।

---

[1] भा.पु.स.५ पृ.स.३४७

[2] भा.पु.स.५ पृ.स.३४७

## १४७. मन्त्रेष्वान्यादेरात्मनः

**सूत्रार्थः :-** मन्त्रेषु आत्मन् शब्दस्य लोपस्यात् आङि ।

**प्र.अ :-** आदेः ।

**प्र.क्र :-** आङि परतः आत्मन् शब्दस्य आदेर्लोपो भवति । तस्मात् त्मना इति रूपं सिध्यति । अत्र भाष्ये सूत्रे आदेरिति पदं प्रत्याख्यातम् । **आदिग्रहणानर्थक्यम् आकारप्रकरणात् ।**[1] आकारप्रकरणात् आदि ग्रहणाभावेऽपि आदेरेव आकारस्य लोपो भवतीति कृत्वा आदिग्रहणं प्रत्याख्यातमाकरे ।

**प्र.सू.स्व :-** मन्त्रेष्वान्यात्मनः ।

[1] म भा V पु पु सं 353

# सप्तमाध्याये प्रत्याख्यातानि सूत्राणि

**प्रथमः पादः**

### १४८. नेदमदसोरकोः

**सूत्रार्थः :-** अककारयोरिदमदसोर्भिस ऐस् न स्यात् ।

**प्र.अ :-** द्वौ प्रतिषेधौ प्रत्याख्यातम् ।

**प्र.क्र :-** "अतो भिस ऐस" इत्यतो भिस ऐस् इत्यनुवर्तत इति कृत्वा अककारयोः इदमदसोः भिस ऐस् न स्यात् इत्यर्थः लभ्यते । अत्र च सूत्रे प्रतिषेधौ यावुच्येते तावुभावपि प्रत्याख्यायेते । इदं शब्दात् भिसि त्यदादीनाम इति अत्वे, इद् अ भिस् इति स्थिते "अतो गुणे" इति पररूपे, इद् भिस् "हलि लोपः" इति इद् लोपे, अ भिस् इत्यवस्थायां भिस ऐस्त्वे प्राप्ते प्रकृतसूत्रं प्रतिषेधति ऐस्त्वम् । तस्मात् "बहुवचने झल्येत्" इति एत्वे एभिरिति सिध्यति । इदमदसोर्न इत्यस्यायमर्थः । अकोः इत्यत्र नञः प्रयोजनं किमिति जिज्ञास्यमाने लभ्यते इमकैः इति । इदं शब्दस्य अकचि इमकमिति सिध्यति ।

इदकं भिस् इति स्थिते त्यदाद्यत्वे, इदक अ भिस्। अत्र पररूपे इदक भिस् "दश्च" इति मत्वे इमक भिस् । अत्रेदानीम् ऐस् प्राप्तः । नेदमदसोरकोः इत्युच्यमाने अत्रापि निषेधो भवति । तस्मात् अकोः इति गृह्यते । एवं च सूत्रे विद्यमानाभ्यां द्वाभ्यां नञ्भ्यां निरुक्तं रूपं संपादितम् । परन्तु नञ्भ्यां विनापि तद्रूपं साधयितुं शक्यत इति कृत्वा नञ्द्वयरहितसूत्रमेव भाष्यकारैरङ्गीक्रियते तथा च कथं सूत्रन्यास इति चेत् इदमसोः कात् इति ।

इद् भिस्, इमक भिस् इत्युभयत्रापि "अतो भिस ऐस्" इत्यनेन भिस ऐस्त्वे प्राप्ते पुनः इदमदसोः कादिति सूत्रं नियमाय भवति । यदि इदमदसोः भिस ऐस्त्वं तर्हि कात्परस्यैव भैस इति नियमाय भवति । एवं प्रथमे एभिरित्यत्र कात्परत्वाभावाद्भिस ऐस्त्वम् एवं द्वितीये इमकैरित्यत्र कात्परत्वाच्च इष्टं सिद्ध्यति ।

**प्र.सू.स्व :-** इदमदसोः कात् ।[1]

## १४९. टाङसिङसामिनात्स्याः

**सूत्रार्थः :-** अकारान्तादङ्गात् टादीनां क्रमादिनादय आदेशाः स्युः ।

**प्र.अ :-** आदेशे इकारः ।

**प्र.क्र :-** अत्र इदित्यादेशः तावत् रामेण इत्येतदर्थः । तथाहि – राम टा इति स्थिते इनादेशे गुणे "अट्कुप्वाङ्नुम्व्यवायेऽपि" इति च णत्वे रामेण इति रूपम् । रामेण इति यदि प्रयोजनम् इति तर्हि नादेशेनैव साधयितुं शक्यते । तथाहि –
"बहुवचने झल्येत्" (७/३/१०३) इत्यत्र योगविभागः क्रियते। बहुवचने झलिति एको योगः । एदित्यपरः । एवञ्च राम न इत्यवस्थायाम् एदिति विभक्तसूत्रेण एत्वे णत्वे च रामेण इति सिध्यति । तस्मादिनादेशं विनापि रामेणेति रूपं साधयितुं शक्यमिति कृत्वा नादेशेनैव निर्वाहः कर्तव्य।

---

[1] भा.पु.स.६ पृ.स.१८

**प्र.सू.स्व :-** टाङसिङसाम् नात्स्याः ।[1]

## १५०. युदष्मदस्मद्भ्यां ङसोऽश्

**सूत्रार्थः :-** युष्मदस्मद्भ्यां परस्य ङस अश् इत्ययमादेशः स्यादिति सूत्रार्थः तव मम इत्युदाहरणानि ।

**प्र.अ :-** शित्करणं प्रत्याख्यायते ।

**प्र.क :-** युष्मदो ङस् इति स्थिते मपर्यन्तस्य तवममौ इत्यादेशयोः कृतयोः, तव अद् ङस् एवं मम अद् ङस् इति सिद्धे अदो लोपे ङस अशादेशे च कृते पररूपे च तव मम इति च सिद्ध्यति ।

अत्र च ङसः स्थाने योऽश् विधीयते तत्र अशि शकारः प्रत्याख्यातः । अत्र ङस इति षष्ठीश्रवणात् अलोन्त्यस्य इति परिभाषायाः प्रवृत्तौ अन्त्यस्य सकारस्य अकारादेशे, तव अ अ इति त्रिषु अकारेषु प्राप्तेषु त्रयाणामपि "अतो गुणे" इति पररूपे तव मम इति च सिध्यति । तस्मात् अकारः शकारसमुच्चितो न विधेयः इति चेत् – अत्र भाष्यकारेण "यदि तल्लभ्येत कृतं स्यात्तत्तु न लभ्यम् । किं कारणं? अत्र हि तस्मादित्युत्तरस्यादेः परस्येत्यकारस्य प्रसज्येत" इत्युक्तम् । तथाहि अत्र च युष्मदस्मद्भ्यामिति पञ्चमीश्रवणात् "तस्मादित्युत्तरस्य" इति परिभाषायाः प्रवृत्तौ आदेरकारस्य प्राप्नोतीति चेत् – ङस आदेशे शित्करणमनर्थकम् । किं कारणमिति चेत् – ङस अकारो विधीयते, अन्त्यादेशे

---

[1] भा.पु.स.६ पृ.स.१८-१९

प्राप्ते "तस्मादित्युत्तरस्य" इति परिभाषया आदेरकारस्यैव पुनर्विधानं भवति । अकारस्य पुनरकारविधाने प्रयोजनाभावात् अकारविधानं व्यर्थम् । व्यर्थं सत् तज्ज्ञापयति सर्वादेशताम् । एवञ्चान्तरेणापि शकारं सर्वादेशता ज्ञापकेन साधयितुं शक्यत इत्यतः युष्मदस्मद्भ्यां ङसः अ इत्यलम् ।

**प्र.सू.स्व :-** युष्मदस्मद्भ्यां ङसः अः ।[1]

## १५१ अमो मश्

**सूत्रार्थः :-** मिबादेशस्यामो मश् स्यात् । विधीमित्युदाहरणम् ।

**प्र.अ :-** शित्करणं प्रत्याख्यायते ।

**प्र.क्र :-** हन् धातोर्लुङि च्लि, तस्य च सिचि, ततो वध् स् मिप् इत्यवस्थायां "तस्थस्थमिपां तान्तन्तामः" इति अमादेशे, वध् स अम्, इडागमे मिप इकारलोपे, वध इस् म् अत्र च "अस्तिसिचोऽपृक्ते" इति ईटि, सस्य लोपे, सवर्णदीर्घे, बहुलं छन्दसि इति अडाभावपक्षे, वधीत् इति रूपम् ।अत्रामः स्थाने मशादेशो विधीयते । स च शित्वात् सर्वादेशो भवति। तत ईड्वतीति कृत्वा वधीमित्यादि सिद्ध्यति । मशः सर्वादेशत्वसाधनार्थं मश् शित्क्रियते, स शकारः प्रत्याख्यातः । तथाहि -- शकारस्य शित्वे किं प्रयोजनमिति चेत् सर्वादेश इति पर्यवस्यति। यद्यत्र शकारो न स्यात् अमः अन्त्यादेशत्वेन अमो मकारस्यैव मकारादेशो विहितः स्यात् । तस्मादिष्टस्य सर्वादेशस्य सम्पादनार्थं शकारः

---

[1] भा.पु.स.६ पृ.स.३०

कर्तव्य इति चेत् – शकाराभावेऽपि सर्वादेशस्सिध्यति । न च शकाराऽभावे अन्त्यस्यैव प्रसक्तिरिति वाच्यम् । मकारस्य स्थाने पुनर्मकारविधानं व्यर्थं सत् सर्वादेशतां ज्ञापयति । ज्ञापितायान्तु सर्वादेशतायां अमः सम्पूर्णस्यैव स्थाने मादेशो भविष्यति । मकारस्यापि मकारवचने अस्ति किञ्चित् प्रयोजनम्। यथा "मो राजि समः क्वौ" इत्यत्र मकारस्य स्थाने ये अनुस्वारादाय उच्यन्ते तेषां बाधनपूर्वकं विकारतां नाप्नोतीत्येतादृशप्रयोजनसत्वात् न ज्ञापकं, येन शकारः प्रत्याख्यातुं शक्येत इति चेत् – द्विमकारको निर्देशः क्रियते ममिति । अत्र मकारादकार उच्चारणार्थः । अन्त्यमकारस्तु सँयोगान्तलोपेन अपहृतो भवति । तस्मात् द्विमकारत्वात् सर्वादेशो भवति । तस्मात् तदर्थस्तु शकारो न कर्तव्य इति समादाय पुनः शङ्कते – द्विमकारनिर्देशपूर्वकोऽयमादेशः । तत्र मकारस्य सँय्योगान्तलोपेन लोप इत्युच्यते । तर्हि सँय्योगान्तलोपस्यासिद्धत्वात् मकारस्यापृक्तत्वाभावात् ईडागमाभावे वधीमिति रूपं न सिद्ध्येत् इति चेत् – अयं मकारो यकारपूर्वक उच्चार्यते । तत्र च "लोपोव्योर्वलि" इति लोपो भविष्यति । तस्य च असिद्धत्वाभावत् अपृक्तत्वोपलब्धौ ईटि वधीम् इति सिद्धम् । अमो म इतीयता सिद्धम् ।

**प्र.सू.स्व :-** अमो म ।[1]

---

[1] भा.पु.स.६ पृ.स.४९

## १५२. श्रीग्रामण्योश्छन्दसि

**समासः :-** श्रीश्च ग्रामणीश्च श्रीग्रामण्यौ, तयोः श्रीग्रामण्योः ।

**सूत्रार्थः :-** आमो नुट् ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम् ।

**प्र.क :-** आमो नुट् भवति। पञ्चम्यर्थे षष्ठी । श्री आम् इत्यत्र "वाऽमि" इति नदीत्वविकल्पे, नदीत्वाभावपक्षे, "ह्रस्वनद्यापो नुट्" इति नुटि अप्राप्तेऽनेन नुट् । नुटि च श्रीणामिति सिध्यति । एवं सूत्रग्रामणीनामित्यत्रापि नुटि दीर्घो भवति । इदमेव सूत्रप्रयोजनम् । सूत्राभावेऽपि प्रयोजनं साधयितुं शक्यते । तथाहि – श्री आमित्यत्र छन्दसि व्यवस्थितविभाषाश्रयणात् नदीत्वादेव नुट् साध्यते । दृष्टानुविधित्वाच्च छन्दसः । सूत्रग्रामणीनामित्यत्र समाहारे नपुंसकत्वात् ह्रस्वे सिद्धे "ह्रस्वनद्यापो नुट्" इत्येव नुट् साध्यत इत्यतः अशिष्योऽयं योगः ।[1]

## १५३. नेट्यलिटि रधेः

**सूत्रार्थः :-** लिड्वर्जे इटि रधेर्नुम् न स्यात् ।

**प्र.अ :-** द्वौ नञौ प्रत्याख्यातौ ।

**प्र.क :-** "इदितो नुम् धातोः" इत्यतो नुमित्यनुवर्तमाने लिड्वर्जे इटि रधेः नुम् स्यादिति सूत्रार्थः सम्पद्यते । अत्र यौ प्रतिषेधावुच्येते तावुभावपि प्रत्याख्यायेते । कथं तर्हि ररन्धिव , रेध्व, ररन्धिम, रेध्म इति रूपाणि साध्यन्त इति प्रश्नः ।अत्र

---

[1] भा.पु.स.६ पृ.स.५५

च इटि लिटि रधेः नुम् इति सूत्रं क्रियते । इडित्ययमजादिरिति कृत्वा रधि जभोरचि इत्यनेन नुमि प्राप्ते पुनरत्र नुम्विधानं नियमाय भवति। इडादौ यदि रधेः नुम् तर्हि लिट्येवेति। इड्व रधादिभ्यश्च इति विकल्पेन विहितः इति कृत्वा इड्पक्षे नुमि च ररन्धिव इडभावे नुमः अपि अभावात् रेध्व इति च सिद्ध्यति। तस्मात् इटि लिटि रधेर्नुम् इति सूत्रमित्यलमित्याशयः।

**प्र.सू.स्व :-** इटि लिटि रधेः [1]।

## १५४. आच्छीनद्योर्नुम्

**सूत्रार्थः :-** अवर्णान्तादङ्गात्परो यः शतुरवयवः तदन्तस्य अङ्गस्य नुम् वा स्यात् शीनद्योः परतः ।

**प्र.अ :-** नुम् इतीदं प्रत्याख्यायते ।

**प्र.क्र :-** "नाभ्यस्ताच्छतुः" इत्यतः शतुरित्यनुवर्तते । "वा नपुंसकस्य" इत्यतो वा इत्यनुवर्तते । अङ्गस्येतितु वर्तत एव । शतुरित्यत्र षष्ठ्याः अवयवावयविभावसम्बन्धोऽर्थः । तस्मात् अवर्णादङ्गात्परो यः शतुरवयवः तदन्तस्य अङ्गस्य नुम्वा स्यात् शीनद्योः परत इत्ययमर्थो लभ्यते । तुदती, तुदन्तीत्युदाहरणम् । तुदत् इति शत्रन्तात् औङि, "नपुंसकाच्च" इति श्यां नुमि च तुदन्तीति रूपम् । तदभावे च तुदतीति रूपम् । अत्र सूत्रे नुम् ग्रहणं प्रत्याख्यातम् । "इदितो नुम् धातोः" इत्यतो "नाभ्यस्ताच्छतुः" "वा

[1] भा.पु.स.६ पृ.स.५८

नपुंसकस्य" इति पर्यन्तं नुम् ग्रहणमनुवर्तते । तदग्रे "शप्श्यनोर्नित्यम्" "सावनडुहः" "दृक्स्ववस्स्वतवसां छन्दसि" इत्यत्रापि नुम् विधीयते । स च नुम् "इदितो नुम् धातोः" इत्यत एव स्वीकर्तुं शक्यः । न तु "आच्छीनद्योर्नुम्" इत्यतः । तस्मात् आच्छीनद्योरित्येवालम्।

**प्र.सू.स्व :-** आच्छीनद्योः ।[1]

**द्वितीयः पादः**

## १५५. न वृद्भ्यश्चतुर्भ्यः

**सूत्रार्थः :-** वृतादिभ्यः चतुर्भ्यः सकारादेः आर्दधातुकस्य इण् न तङानयोरभावे ।

**प्र.अ :-** चतुर्ग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** सूत्रेणानेन वृतादीनां इण्णिषेधः कृतः। अत्र च सूत्रे चतुर्ग्रहणं प्रत्याख्यातम् । कुत इति चेत् । वृतादयश्च चत्वार एव । तेभ्यः चतुर्भ्योऽपि निशेधोऽयमिष्यते इति कृत्वा चतुर्ग्रहणं प्रत्याख्यातमाकरे । **चतुस्तासिक्लृपिग्रहणानर्थक्यम् ।** [2]

**प्र.सू.स्व :-** न वृद्भ्यः।

---

[1] भा.पु.स.६ पृ.स.७५

[2] म भा पु VI पु सं 139

## १५६. योऽचि

**सूत्रार्थः :-** अनयोर्यकारादेशस्स्यात् अनादेशे अजादौ परतः ।

**प्र.अ :-** अच्ग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** "युष्मदस्मदोरनादेशे" इत्यतो युष्मदस्म-दोरित्यनुवर्तमाने अनयोः यकारादेशः स्यात् अनादेशे अजादौ विभक्तौ परतः इत्ययमर्थः सम्पन्नः । युष्मद् टा, अस्मद् टा इति स्थिते "त्वमावेकवचने" इति मपर्यन्तस्य त्वमयोः कृतयोः अनेन दकारस्य यकारे अदोऽकारेण पररूपे च त्वया मया इति सिध्यति । अत्र तृतिया विभक्तिटाप्रत्ययस्य अविद्यमान-आदेशत्वं सिद्धम् । अत्र च अच्ग्रहणं प्रत्याख्यातम् । ननु च अच्ग्रहणाभावे यः इति केवलं सूत्रम् । युष्मदस्मदोरेव प्रसङ्गात् सर्वेष्वपि प्रत्ययेषु परेषु अन्त्यस्य आदेशः प्राप्नोतीति दोषः । तस्मात् अनादेशे हलि व्यावृत्तिपूर्वकमनादेशे अच्येवादेशसंपादनार्थम् अच्ग्रहणं कर्तव्यमिति चेत् – न । सर्वास्वप्यनादेशविभक्तिषु परासु यत्वमन्त्यस्य उत्सर्गतः करिष्यते । अनादेशे हलादावपि स्यादिति शङ्काया अवसर एव नास्ति आत्वविधानात् । अनादेशे हलि आत्वं विधीयते । तस्मात् अयं यः पारिशेष्यात् अजादावेवेत्यवसीयते । तस्मात् अजिति न कर्तव्यम् । यः इत्येव सूत्रम् ।

**प्र.सू.स्व :-** यः ।[1]

[1] भा.पु.स.६ पृ.स.१५६

## १५७. शेषे लोपः

**सूत्रार्थः :-** आत्वयत्वनिमित्तेतरविभक्तौ परतः युष्मदस्मदोरन्त्यस्य लोपः स्यात् ।

**प्र.अ :-** शेषग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** युष्मद् सु, अस्मद् सु इति स्थिते "त्वाहौ सौ" इति मपर्यन्तस्य त्व अह इत्यादेशे त्व अद् सु, अह अद् सु इत्यत्र "ङेप्रथमयोरम्"इत्यमादेशे च पररूपे त्वद् अम्, अहद् अम् इति स्थिते "शेषे लोपः" इत्यन्त्यस्य दकारास्य लोपे पररूपे च त्वम्, अहमिति च सिध्यति । अत्र शेषग्रहणं प्रत्याख्यातम् ।

"योऽचि" इति सूत्रेण उत्सर्गतः अनादेशविभक्तौ परतो युष्मदस्मदोरन्त्यस्य यो विधीयते । तत्र एकदेशे अनादेशे हलि तयोरन्त्यस्याकारो विधीयते । यद्ययं शेषग्रहणरहितो योगो लोप इतिरूपः अनादेशेऽपि प्रवर्तते तर्हि आत्वयत्वविधायक शास्त्रयोः वैयर्थ्यं स्यात् । तस्मात्तयोरविषय एवायं प्रवर्तते। तयोर्विषयश्च अनादेशः । अविषय एव विद्यमान-आदेशो भवति । तस्मात् विद्यमानादेशविषये आत्वयत्वविधायकयोः सूत्रयोः प्रवृत्यभाव एव । तस्मात् शेषग्रहणं विनापि त्वमहमित्यादिषु अवश्यं लोपः प्रवर्तत इति शेषग्रहणं न कर्तव्यम् ।

**प्र.सू.स्व :-** लोपः।[1]

[1] भा.पु.स.६ पृ.स.१५६

## १५८. तदोः सः सावनन्त्ययोः

**सूत्रार्थः** :- त्यदादीनां तकारदकारयोः अनन्त्ययोः सः स्यात् सौ ।

**प्र.अ** :- अनन्त्ययोरिति प्रत्याख्यातम्

**प्र.क** :- अनन्त्ययोरिति किमर्थं सूत्रे पठ्यते । यद्यनन्त्ययोरिति सूत्रे पदं न स्यात् तर्हि त्यदादीनां विधीयमानस्सः अन्त्यस्यापि प्राप्नोति । अन्त्यस्य प्राप्ते स्त्रियां सा इति रूपं न सिद्ध्यति । तथाहि – तद् सु इति स्थिते, तदोरुभयोरपि प्रकृतसूत्रेण सत्वे, सस् स् इति स्थिते, हल्ङ्यादिना सोर्लोपे, रुत्वविसर्गयोः कृतयोः स इति रूपं प्राप्नोति । तस्मात् अनन्त्ययोरिति ग्रहणं कार्यम् । तस्मिन् तूच्यमाने त्यदादीनाम् अनन्त्ययोरेव तदोः सत्वमित्यर्थलाभात् स्त्रियामपि स इत्येव प्राप्नोति इति दोषः परास्तो भवति । तस्मादनन्त्ययोरिति ग्रहणीयमिति इति चेन्न । तथाहि – इष्टसिध्यर्थत्वात् योगविभागस्य प्रकृतेऽपि योगविभागः क्रियते। तदोः सः सौ इत्यनन्तरम् अदस औ सुलोपश्च इति सूत्रम् । अत्र अदसः इति योगो विभज्यते । अत्र अदसो दस्य सत्वमित्यर्थोऽस्य योगस्य । तदोः सः सौ इत्यनेनैव अदसोऽपि दकारस्य सत्वे प्राप्ते पुनः अदस इति योगो नियामाय सम्पद्यते । त्यदादीनां दस्य यदि सः तर्हि अदसवयवस्य दकारस्यैवेति । तस्मात् तच्छब्दादिषु दकारसत्वेऽपि नियमेन व्यावृत्यान्त्यस्य दकारस्य सत्वप्राप्त्यभावः । एवं त्यदादिषु तकारस्या अन्त्यत्वाभावात् अन्त्यतकारस्य सत्वप्राप्तिः स्वभावत एव नास्ति । एवञ्चान्त्ययोर्माभूदिति धिया अनन्त्ययोर्ग्रहणं न कार्यमिति स्थितम् ।

**प्र.सू.स्व :-** तदोः सः सौ।[1]

**तृतीयः पादः**

## १५९. यथातथयथापुरयोः पर्यायेण

**सूत्रार्थः :-** नञः परयोः पूर्वोत्तरपदयोः आदेरचः वृद्धिः पर्यायेण ञिदादौ ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम्।

**प्र.क्र :-** "नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्" इत्यतो नञित्यनुवर्तते । नञः परयोः पूर्वोत्तरपदयोः आदेरचः वृद्धिः पर्यायेण ञिदादौ । न यथातथा अयथातथा । तस्य भावः अयथातथा ष्यञ् आयथातथ्यम्। पूर्वपदस्य नञः "तद्धितेष्वचामादेः" इति वृद्धौ एवं रूपम् । यदा तु उत्तरपदस्य आदेरचो वृद्धिः तदा अयाथातथ्यमिति इति ष्यञि सम्पद्यते । अत्र उभावपि नञ्पूर्वपदौ ब्राह्मणादी । ब्राह्मणादित्वात् ष्यञ् । एवम् आयथापुर्यम् अयाथापुर्यमिति च सिध्यति । अयं योगः संपूर्णतया प्रत्याख्यातः ।

कथं तर्हि प्रत्याख्यातेऽपि सूत्रे इष्टरूपाणां सिद्धिरिति चेत् – यदा तावत् आयथातथ्यम् आयथापुर्यमिति रूपे विवक्षिते तदैवं विग्रहः करिष्यते । न यथातथा, न यथापुर इति । समासे अयथातथा, अयथापुर इति सिद्धे ततः ष्यञि आयथातथ्यम्, आयथापुर्यम् इति च रूपे । यदा तावत् अयाताथतथ्यम्

---

[1] भा.पु.स.६ पृ.स.१७५

अयाथापुर्यमिति विवक्षितं तदा एवं विग्रहः करिष्यते । यथातथा, यथापुर अनयोः भावः याथातथ्यं, याथपुर्यम् । न याथातथ्यं, न याथापुर्यम् = अयाथातथ्यम्, अयाथापुर्यम् । इत्येवं सिद्धानि रूपाणि । तस्मात् योगोऽयं न कर्तव्यः ।[1]

## १६०. भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि

**सूत्रार्थः :-** एषामत इद्वा स्यात् ।

**प्र.अ :-** नञ्पूर्वग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** अत्र सूत्रे नञ्पूर्वग्रहणं न कर्तव्यम् । कुत इति चेत् सूत्रे अपिग्रहणेन केवलानां सूत्रपठितानामित्वप्रकरणे समुच्चयो भवति । तर्हि निर्भस्त्रका - निर्भस्त्रिका, निस्वका - निस्विका इत्यादि कथमिति चेत् – अस्य अङ्गाधिकारपठितत्वात् तस्य च तदन्तस्य च ग्रहणं सिद्ध्य ति। तस्माच्च हेतोः नञ्पूर्वग्रहणं न कर्तव्यम् ।

**प्र.सू.स्व :-** भस्त्रैषाजाज्ञाद्वास्वाऽपि ।[2]

## १६१. यजयाचरुचप्रवचर्चश्च

**सूत्रार्थः :-** एतेषां कुत्वं न ण्ये परे ।

**प्र.अ :-** प्रवचग्रहणं प्रत्याख्यातम् ।

---

[1] भा.पु.स.६ पृ.स.१९६

[2] भा.पु.स.६ पृ.स.१०४

**प्र.क्र :-** प्रकृतसूत्रेण ण्ये प्रत्यये परे कुत्वनिषेधः क्रियते । वच् धातोर्विषये तावत् "वचोऽशब्दसंज्ञायाम्" इति अशब्दसंज्ञायामेव कुत्वनिषेधः कृतः । प्रपूर्वकश्च वचिरशब्दसंज्ञायामेवेति कृत्वा कुत्वनिषेधो "वचोऽशब्दसंज्ञायाम्" इति सूत्रेणैव सिद्धतीत्यतः पुनरत्र सूत्रे प्रवचग्रहणं न कार्यम् । प्रपूर्वकादेव वचेरशब्दसंज्ञायां कुत्वप्रतिषेधार्थं पुनर्ग्रहणम् । एवं च अविवाक्यमह इत्यादिषु कुत्वप्रतिषेधो भवतीति प्रयोजनम् । तस्मात् प्रवचिग्रहणं कर्तव्यमिति चेन्न । यद्येवं नियमः क्रियते तर्हि नित्यमविवाक्यमित्येव प्राप्नोति । अविवाच्यमिति न प्राप्नोत्ये व । अतो नियमो नाङ्गीकर्तव्यः । उभयोरपि रूपयोरिष्यमाणत्वात् । तत्र च पृषोदरादित्वात् अविवाक्यमित्यत्र कुत्वम् । "वचोऽशब्दसंज्ञायाम्" इति सूत्रेण कुत्वनिषेधेऽविवाच्यमिति च सिध्यति । तस्मात् प्रवचग्रहणं न कर्तव्यम् ।

**प्र.सू.स्व :-** यजयाचरुचर्च ।[1]

## १६२. घोर्लोपो लेटि वा

**सूत्रार्थः :-** घुसञ्ज्ञकानां लेटि परतो लोपो वा ।

**प्र.अ :-** वाग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** घुसंज्ञकानां लेटि परतो लोपो वा । घोः इति षष्ठीश्रवणात् अन्त्यस्याकारस्य लोपः प्राप्नोति । डुधाञ् धारणपोषणायोः इति धातोः लेट्, धा तिप्, श्लौ धा श्लु तिप्, द्वित्वे च धाधा ति, चर्त्वे ह्रस्वे च दधा ति इत्यवस्थायां

[1] भा.पु.स.६ पृ.स.२१४

"घोर्लोपो लेटि वा" इत्यनेन आकारलोपे दध् त "लेटोऽडाटौ" दध् अद् त दधत् इति रूपम् । अत्र वा ग्रहणं न कार्यम् । वाग्रहणाभावे दधद्रत्नानि, दधाद्रत्नानि इति रूपद्वयं सुकरमेव । तथाहि - घोर्लोपो लेटि इतीयता सूत्रेण नित्यमकारलोपे कृते "लेटोऽडाटौ" इति विकल्पेन अटि दधद्रत्नानि इति रूपम् । आटि च क्रियमाणे दधाद्रत्नानि इति रूपम् । एवमडाटाभ्यां इष्टे सिद्धे पुनर्वाग्रहणं न कार्यम् ।

**प्र.सू.स्व :-** घोर्लोपो लेटि ।[1]

## १६३. ओतः श्यनि

**सूत्रार्थः :-** ओतो लोपस्स्यात् श्यनि ।

**प्र.अ :-** श्यन् ग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** शो तनूकरणे, दो अवखण्डने, षो अन्तकर्मणि, छो छेदने इत्येतेषामङ्गानां लोपः स्यात् । "दिवादिभ्यः श्यन्" इति श्यनि शो श्यन् ति इति स्थिते, ओकारस्य अलोऽन्त्यस्य इति परिभाषया लोपे, श् यति, श्यति इति रूपं सिध्यति ।

अत्र च सूत्रे श्यन् ग्रहणं प्रत्याख्यातम् । श्यनि इत्यपेक्षया शितीति वक्तव्यमित्याशयः । ओकारान्तानां श्यनि क्रियमाणे ओतः शिति इत्येतावतैव ओकारस्य लोपः सुकरः । श्यनि शकारस्य इत्वात् । तस्मात्तल्लोपे भेदाभावात् शितीत्येव सुवचम् । ननु ओकारान्तानामन्यस्मिन् शित्यपि लोपः प्रसज्येत

---

[1] भा.पु.स.६ पृ.स.२१५

तन्निवारणार्थं श्यन्ग्रहणमिति चेत् – न । ओकारान्तानां श्यन्भिन्नस्य शितोऽसत्वात् । तस्मात् शिदित्यनेनात्र श्यनेव गृह्यते । ननु श्यन्निति अग्र अनुवृत्यर्थं स्वीक्रियते – शमामष्टानां दीर्घः श्यनि इत्येतदर्थम् इति चेत् – न । तत्रापि शिति इत्येव सिद्धेः । तत्र शमादिषु केवलं शितीत्युच्यमाने "वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः" इत्यनेन वा इत्यनुवर्तमाने शप्यपि दिर्घः प्रसज्येत । तस्मात् श्यनीत्येव वक्तव्यमिति चेत् – न । तत्रापि शितीत्येव सिद्धत्वात् । शितीति तावत् विहितविशेषणम् । तस्मात् शमादिभ्यो विहितो यः शित् इति व्याख्यानेन शब्रूपे शिति परतो दीर्घो बाधितो भवति। शमादिभ्य इत्युक्तत्वात् नश् धातोः श्यन्रूपे शिति अपि दीर्घः स्यादिति नाशङ्कनीयम् । अष्टानामिति सङ्ख्येयानां निर्दिष्टत्वात् । तस्मात् ओतः शिति इति सूत्रमुचितम् । येन च "ष्ठिवुक्लमुचमां शिति" इत्यत्र शितिग्रहणं न कर्तव्यं भवति ।

**प्र.सू.स्व :-** ओतः शिति ।[1]

## १६४. विभाषा द्वितीयातृतीयाभ्याम्

**सूत्रार्थः :-** आभ्यां ङितः स्याट् स्यादापः च ह्रस्वः ।

**प्र.अ :-** सम्पूर्णं सूत्रं प्रत्याख्यातम्।

[1] भा.पु.स.६ पृ.स.२१५

**प्र.क्र :-** "वा प्रकरणे तीयस्य ङित्सु उपसंख्यानम्"[1]वा प्रकरणे तीयस्य ङित्सूपसंख्यानं कर्तव्यम् । द्वितीयायै-द्वितीयस्यै, तृतीयायै-तृतियस्यै । "विभाषा द्वितीयातृतीयाभ्याम्" इत्येतत् न कर्तव्यं भवति। द्वीतीयातृतीया इत्याभ्याम् आबन्ताभ्यां ङित्सु प्रत्ययेषु परतः तयोः स्याट् ह्रस्वश्च विधीयते । येन च द्वितीयस्यै इत्यादिसिद्धम् । पुन्नपुंसकयोस्तावत् 'तीयस्यङित्सूपसंख्यानम्' इति तावत् वक्तव्यमेव । तेनैव स्त्रियामपि साधयितुं शक्यत्वात् तदर्थं सूत्रमिदं न कर्तव्यम् । तथा च भाष्यम् - 'उपसङ्ख्यानमेवात्र ज्यायः । इदमपि सिद्धं भवति – द्वितीयाय द्वितीयस्मै, तृतीयाय तृतीयस्मै इति'[2]।

[1]भा.पु.स.१ पृ.स.३४५

[2]भा.पु.स.१ पृ.स.३४५

# अष्टमाध्याये प्रत्याख्यातानि सूत्राणि

**प्रथमः पादः**

**१६५. वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु**

**सूत्रार्थः :-** वाक्यादेः आमन्त्रितसंज्ञस्य असूयादिषु गम्येषु द्वे स्तः ।

**प्र.अ :-** कुत्सनभर्त्सनग्रहणम् ।

**प्र.क्र :- असूयाकुत्सनयोः कोपभर्त्सनयोश्च एकार्थत्वात् पृथक्त्वनिर्देशानर्थक्यम् ।**[1] असूया कुत्सनमित्येकोऽर्थः , कोपो भर्त्सनमित्येकोऽर्थः।असूयाकुत्सनयोः एकार्थत्वात् ,असूयाशब्दात् कुत्सनशब्दस्य पृथक् पाठः व्यर्थः स्यात् । एवं कोपभर्त्सनयोः एकार्थत्वात् कोपशब्दात् भर्त्सनशब्दस्य पृथक् पाठः व्यर्थः स्यात् । तस्मात् कुत्सनभर्त्सनशब्दौ प्रत्याख्यातौ ।

**प्र.सू.स्व :-** वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपेषु ।

**१६६. तिङ्ङतिङः**

**सूत्रार्थः :-** अतिङन्तात् पदात् परं तिङन्तं विहन्यते ।

**प्र.अ :-** अतिङ्ग्रहणं प्रत्याख्यातम् ।

**प्र.क्र :-** "अनुदात्तं सर्वमपादादौ" इत्यत अनुदात्तमिति, "पदात्" इत्यधिकारपठित्वात् पदादिति चाऽन्वेति । तस्मादतिङन्तात् पदात् परं तिङन्तं

[1] म भा पु VI पु सं 27

निहन्यत इति सूत्रार्थः । रामौ पश्य इत्यादिषु रामवित्यतिङन्तरूपात् पदात् परस्य पश्येत्यस्य तिङन्तस्य निघातो भवति । अतिङ्ङिति दलस्य प्रयोजनं तावत् पचति करोति इत्यत्र करोतेर्निघाताभावसंपादनमेव । यद्यतिङिति केवलं सूत्रं स्यात् तर्हि पदादिति अधिकारपठितत्वात् पदात्परं तिङन्तं निहन्यते इत्यर्थः स्यात्। तदा पचति करोतीत्यत्रापि करोतीत्यस्य निघातः प्राप्नोति । तन्माभूदिति अतिङ् इति पदं निवेश्यते । तन्निवेशे तु अतिङ्रूपात् पदात् परस्यैव तिङो निघातः, न तु तिङ्रूपात् परस्य । एवं जातायाञ्च व्यवस्थायां पचति करोति इत्यत्र करोतीति पदात्परञ्चेदपि अतिङ्रूपपदात् परं नेति कृत्वेष्टसिद्धिर्भवति । एवमेतादृशेष्टसिद्धिः विनाप्यतिङ्ग्रहणं सिध्यति। "समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या" इत्युक्तत्वात् समानवाक्ये इति स्वीकारादेकस्मिन् वाक्ये च द्वयोस्तिङन्तयोरसम्भवः । अथवा तिङन्तरूपे पदे परे पूर्वं तिङन्तरूपपदस्याभावात् पचति करोतीत्यस्य निघातप्राप्तिर्न वर्तते तिङित्येतावत्यपि सूत्रे क्रियमाणे ।

**प्र.सू.स्व :-** तिङ् ।[1]

[1] भा.पु.स.६ पृ.स.४९

## १६७. गतिर्गतौ

**सूत्रार्थः :-** गतौ परतः गतिरनुदात्तः ।

**प्र.अ :-** गताविति प्रत्याख्यातम् ।

**प्र.क :-** गतिग्रहणं क्रियत इति कृत्वा प्रपचति, प्रकरोतीत्यादिषु प्र इत्यस्य अनुदात्तो न भवति । अन्यथा केवलं गतिरिति सूत्रे क्रियमाणे गतिभिन्ने, गतौ च परतो गतेः अनुदात्तत्वं प्राप्नोति । अतो गताविति वक्तव्यम् । एतच्च प्रयोजनमन्यथैव सिद्धम्। तिङि चोदात्तवतीति नियमाय भवति। उदात्तवति तिङि गतिरनुदात्त इति हि तदर्थः । गतिरिति केवलेन सूत्रेण सर्वस्या अपि गतेरनुदात्तत्वे सिद्धे पुनः तिङि चोदात्तवति इति नियमाय भवति । नियमश्च अव्यवहितस्य गतेः अनुदात्तश्चेत् अनुदात्तवति तिङि एव इति । एवं च उदात्तभिन्नतिङिपरतः व्यवहितस्यैव गतेः अनुदात्तः सम्पद्यते । तत्र च व्यवधायकः सम्पद्यते गतिरेव । तस्मात् गतिर्गतौ इत्यत्र गताविति न वक्तव्यम् । अन्यव्यवधानासम्भवात् । तस्मात् गताविति न वक्तव्यम् । एवं च प्रपचति इत्यादौ नास्य प्रसक्तिः । तस्माददोषः ।

**प्र.सू.स्व :-** गतिः । [1]

---

[1] भा.पु.स.६ पृ.स.७०

**द्वितीयः पादः**

## १६८. स्वरितोवानुदात्ते पदादौ

**सूत्रार्थः** :- अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात् ।

**प्र.अ** :- स्वरितग्रहणं प्रत्याख्यातम् ।

**प्र.क्र** :- स्वरितग्रहणं शक्यमवक्तुम् । एकादेश उदात्तेनोदात्तः इत्यत उदात्त इत्यनुवृत्तौ पक्षे उदात्तः पक्षे स्वरित इत्येवमाप्नोति रूपद्वयम्। गङ्गाशब्दः फिषोऽन्तोदात्त इति अन्तोदात्तः। तत्स्थाने योऽयमेकारः सोऽपि आन्तरतम्यादुदात्त्तः । अनूपे इत्यप्यन्तोदत्तमिति कृत्वा अकारोऽनुदात्तः । ततश्च एकार-अकारयोरेकादेशे सति पक्षे उदात्तः पक्षे स्वरितः । अत्र च स्वरितः स्थानेऽन्तरतमः एवापादयितुं शक्य इति कृत्वा सूत्रे स्वरितग्रहणं न कर्तव्यम्। सूत्रारम्भः कुत इति चेत् विकल्पसाधनार्थम् । ननु च यद्यत्र स्थनेऽन्तरतम इति स्वरितो भविष्यति तर्हि तस्य सिद्धत्वात् अनुदात्तं पदमेकवर्जमिति प्रवृत्तौ अनूपे इत्यत्र पेः अनुदात्तः प्रसज्येत । यदि तु अनेन स्वरितस्स्यात्तर्हि अस्यासिद्धत्वात् वर्ज्यस्वराप्रवृत्तौ पे इति उदात्तान्त इष्टः सिद्ध्यति । तस्मात् सूत्रं सम्पूर्णमपेक्षितमिति चेन्न । असिद्धं बहिरङ्गमन्तरङ्गे इत्येव सिद्धम् । तथाहि – एकपदसम्बन्धित्वेन जायमानोदात्तापेक्षया पदद्वयसम्बन्धिस्वरितस्य बहिरङ्गत्वेन असिद्धत्वात् तत्प्रयुक्तानुदात्तोऽनुवर्तते । तस्मात् तेन वर्ज्यमानता न स्यादित्येतदर्थन्न कार्यं सूत्रे स्वरितग्रहणम् ।

**प्र.सू.स्व :-** अनुदात्ते पदादौ ।[1]

### १६९. न ङिसम्बुद्ध्योः

**सूत्रार्थः :-** नस्य लोपो न ङिसम्बुद्धौ ।

**प्र.अ :-** ङिग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** सम्बुद्धिग्रहणस्य हे राजन्नित्यत्र नलोपाभावः प्रयोजनम् । तथाहि राजन् शब्दस्य संबुद्ध्येकवचने राजन् सु इति स्थिते हल्ङ्यादिलोपे राजन्नित्यत्र नकारः पदान्तः । तस्मान्नलोपः प्रातिपदिकान्तस्येति नलोपः प्राप्तः । एवं नलोपे प्राप्ते प्रत्ययलक्षणेन संबुद्धिपरकत्वमानीय प्रकृतसूत्रेण नलोपस्य निषेध इष्टं रूपं सिध्यति । हे राजन्निति । ङिग्रहणं तावत् छन्दोऽर्थम् । तथाहि परमे व्योमनीति स्थिते "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" इति सु लोपे जाते, व्योमन्नित्यत्र नकारः पदान्त इति कृत्वा नलोपः प्रातिपदिकान्तस्येति नलोपः प्राप्नोति । प्राप्ते निषेधसामथ्यात् प्रत्ययलक्षणेन ङिपरकत्वमानीय नलोपनिषेधः क्रियते । ततश्च परमे व्योमन्निति इष्टं सिद्धम्।

अत्र ङिग्रहणं न कार्यम् । यतो हि - उभयसंज्ञान्यपि छन्दांसि भवन्ति। प्रकृते पदसंज्ञाबाधिकायाः भसंज्ञायास्स्वीकारः क्रियत इति हेतोर्नलोपाऽप्राप्त्या निषेधकोटौ ङिग्रहणं न कार्यम् । तस्म्मात् "न संबुद्धौ" इति सूत्रम् ।

---

[1] भा.पु.स.६ पृ.स.८७

**प्र.सू.स्व :-** न संबुद्धौ ।[1]

## १७०. दधस्तथोश्च

**सूत्रार्थः :-** द्विरुक्तस्य झषन्तस्य धाञ् धातोः बशो भष्, तथयोः परयोः स्ध्वोस्च परतः ।

**प्र.अ :-** तथोश्च इति प्रत्याख्यातम् ।

**प्र.क्र :-** किमर्थश्चकार इति चेत् स्ध्वोः इत्यनुकर्षणार्थ इत्युक्तम् । तन्न । अनुकर्षणानर्थक्यं स्थानिवत् प्रतिषेधात् । पूर्वत्रासिद्धे न स्थानिवत् इत्युक्तत्वात् श्लौ इत्यनेन लुप्तस्य शपो न स्थानिवतत्वम् । तस्मात् झषन्तत्वं सम्पन्नम् । अभ्यासजश्त्वचर्त्वं सिद्धमित्युच्यमानत्वात् कृते जश्त्वे बशादिः । ततश्च स्ध्वोरिति पूर्वेणैव सूत्रेण सिद्धं भद्ध्वम् । तस्मान्नकार्यश्चकारः । तथोरपि ग्रहणमनावश्यकम् । झलो झलीत्यतो झलीत्यनुवर्तते मण्डूकप्लुत्या । ततश्च झलि झषन्तस्य भष् भवतीत्यर्थः । तथोश्चायं झषन्तो भवति नान्यत्र । तस्मात् दधः इत्येव सूत्रम् ।

**प्र.सू.स्व :-** दधः ।[2]

## १७१. झषस्तथोर्धोऽधः

**सूत्रार्थः :-** झषः परयोः तथोः धः स्यात् न तु दधातेः ।

---

[1] भा.पु.स.६ पृ.स.९९

[2] भा.पु.स.६ पृ.स.११५

**प्र.अ :-** अधः इति प्रत्याख्यातम् ।

**प्र.क :-** अत्र च सूत्रे झषः परयोस्तकारथकारयोर्धकारो विधीयते । तस्मात् धत्तः इत्यादिषु झषः परकत्वेऽपि धत्वं न भवति । प्रयोजनं धाधातोः धत्वाभावरूपम् । तत् सूत्रे अधः इति दलं विना साधयितुं शक्यते । तथाहि – "दधस्तथोश्च" "झलां जशोऽन्ते" "झषस्तथोर्धोऽधः" इति क्रमः । "दधस्तथोश्च" इत्यस्यानन्तरं झलां जश इति सूत्रं क्रियते । अत्र च दधस्तथोरित्यनुवर्तते । तस्मात् दधः तथोः झलां जशो भवन्तीति वाक्यार्थस्सम्पद्यते । ततः अन्ते इति योगः । झलां जश इत्यनुवर्तते । तस्मात् अन्ते च झलां जशो भवन्तीत्यर्थ उपलभ्यते । धत्थ इत्यादिषु अन्ते इति योगेन अन्त्यस्य जश्त्वे तयोः झष्परकत्वाभावादेव धत्वं न सिध्यति । तस्मात् अध इति न वक्तव्यम्।

**प्र.सू.स्व :-** झषस्तथोर्धः ।[1]

## १७२. वाक्यस्य टेः प्लुत उदात्तः

**सूत्रार्थः :-** वाक्यस्य टेः पदावयवस्य प्लुतो भवति स चोदात्तः।

**प्र.अ :-** टिग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** टिग्रहणं किमर्थमिति प्रश्न आह यत्र व्यञ्जनान्तो भवति अग्निचित्, सोमसुत् इति तत्र टिग्रहणाभावे प्लुतयोग्यो हल्वर्णो नेति कृत्वा प्लुतो न स्यात् अतः टि ग्रहणं न कर्तव्यम् । अग्निचित्, सोमसुत् इत्यादिषु सर्वादेशः प्राप्नोति । कुत इति चेत्

---

[1] भा.पु.स.६ पृ.स.११६

अच इति वचनात् अन्त्यस्य न, अन्त्यस्येति वचनादचो न । तस्मात् सर्वादेशप्राप्तिः । अतः टि ग्रहणं कर्तव्यमिति चेत् आह । अत्राच इत्येवोपतिष्ठते । उक्तत्वात् । ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयात् तत्राच इत्येतदुपतिष्ठत इत्युक्तत्वान्न दोषः । तस्मात् टिग्रहणं न कार्यम् ।

**प्र.सू.स्व :-** वाक्यस्य प्लुत उदात्तः ।[1]

**तृतीयः पादः**

## १७३. द्विस्त्रिश्चतुरिति कृत्वोऽर्थे

**सूत्रार्थः :-** कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा स्यात् कुप्वोः ।

**प्र.अ :-** अत्र द्विस्त्रिश्चतुरिति प्रत्याख्यातम् ।

**प्र.क्र :-** प्रकृतसूत्रे द्विस्त्रिश्चतुरित्युक्तत्वात् द्विष्करोति, त्रिष्करोति, चतुष्करोति इत्यादिषु विकल्पेन षत्वं सिद्ध्यति । यद्यत्र न स्यात् चतुरन्तं दलं तर्हि कृत्वोऽर्थ इत्यनेन विसर्गः सम्बध्येत । एवञ्च कृत्वोऽर्थे विद्यमानो यो विसर्गस्तस्य षत्वमित्यर्थकल्पनात् द्विष्करोति, त्रिष्करोतीत्यत्रैव षत्वकल्पनं स्यात् । चतुश्शब्दे तावत् विसर्गस्य कृत्वोऽर्थत्वाभावात् षत्वं न स्यात् । तस्माच्चतुरन्तकं दलमावश्यकमेवेति चेत् – न ।

---

[1] भा.पु.स.६ पृ.स.१३७

पदस्येति वर्तते । तस्मादिकारोकारोपधस्य कृत्वोऽर्थे वर्तमानस्य पदस्य यो विसर्गस्तस्य वा षत्वमित्यर्थलाभात् पञ्चकृत्व इत्यत्रापि षत्वं स्यादिति दोषोऽपि परास्तः । तस्माच्चतुरन्तं दलं सूत्रेऽस्मिन् नापेक्षितम् ।

**प्र.सू.स्व :-** कृत्वोऽर्थे ।[1]

**चतुर्थः पादः**

## १७४. आनि लोट्

**सूत्रार्थः :-** उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् ।

**प्र.अ :-** सूत्रेऽस्मिन् लोड्ग्रहणं प्रत्याख्यातम् ।

**प्र.क :-** प्रहिमानि कुलानि, प्रवपानि मांसानीत्यादिष्वानीत्यस्य नस्य णिर्माभूदिति लोड्ग्रहणं क्रियते । क्रियमाणे च निरुक्तयोर्लोटा सम्बन्धो नास्तीति कृत्वा णत्वं वार्यते । तस्माल्लोड्ग्रहणमपेक्षितमिति चेत् – अर्थवत्परिभाषयैव निरुक्तयोरानीत्यनर्थक इति कृत्वा णत्वाभावस्सम्पद्यते । ततो नार्थो लोड्ग्रहणेन ।

अथवोपसर्गादिति वर्तते । अतः प्रहिमानीत्यत्र मानीत्येतत्प्रति प्रेत्यस्य क्रियागोत्वाभावान्न दोष इति न च वाच्यम् । यतो हि अत्रायं विवेको यत्क्रियायुक्ता

[1] भा.पु.स.६ पृ.स.१८१

इति नैवं विज्ञायते = यस्य क्रिया यत्क्रिया यत्क्रियायुक्ता इति । अपित्वेवं - या क्रिया यत्क्रियेति । तस्माल्लोङ्ग्रणाभाव उपसर्गत्वस्य समुदायस्य य आनिशब्दस्तस्य नस्य ण इति । तस्मादतिव्याप्त्यव्याप्त्योरभावाल्लोडिति न कार्यम् ।

**प्र.सू.स्व :-** आनि ।[1]

[1] भा.पु.स.६ पृ.स.२२१

# आकरग्रन्थाः

1. **पतञ्जलिविरचित-व्याकरणमहाभाष्यम्** । कैयटप्रणीतेन भाष्यप्रदीपेन, नागेशभट्टविरचितभाष्यप्रदीपोद्धासितेन समुल्लसितम् । चौकम्बा -२००८
2. **महाभाष्यम्** । प्रदीपोद्योतराजलक्ष्मीटीकासहितम्, गुरुप्रसादसादशास्त्री, प्रतिभा प्रकाशन,नई दिल्ली ।
3. **श्रीपाणिनिमहामुनिविरिचता-अष्टाध्यायी** । श्रीसिद्धार्थकृष्णरचित-वृत्तिसहिता । कैलासविद्याप्रकाशनं कैलासाश्रमः- २००५
4. **पाणिनीय अष्टाध्यायी-प्रवचनम्** । डा, सुदर्षनदेवरचित सरलसंस्कृतभाष्य, आर्यभाषा नामक हिन्दी टीकया उपेतः । संस्कृत सेवा संस्थान रोहतक – हरियाणा, २०००
5. **काशिका** । न्यास-पदमञ्जरी संस्कृत एवं 'भावबोधिनी हिन्दी टीका, डॉ. जयशङ्कर लालत्रिपाठी, तारा पब्लिकेशन्स, वाराणसी
6. **वैयाकरणसिद्धान्तकौमुदी** । बालमनोरमा-तत्वबोधिनीसहिता , मोतीलाल बनारसीदास , १९९७
7. **वैयाकरणसिद्धान्तकौमुदी** । लक्ष्मीटीकोपेता मोतीलाल बनारसीदास, १९६६
8. **लघुशब्देन्दुशेखरः** । भावबोधिनि-बालबोधिनी व्याख्योपेतः, रष्ट्रियसंस्कृतविद्यापीठं तिरुपतिः, २००७

# प्रत्याख्यातसूत्रानुक्रमणिका

**सूत्राणि** **पृष्ठसङ्ख्या**